वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ २४ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति।
तदस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥२५॥

विदह्यते यस्य च भुक्तमात्रं
दह्येत हृत्कोष्ठगलञ्च यस्य।
द्राक्षासितामाक्षिक संप्रयुक्तां
लीढ्वाभयां वै स सुखं लभेत ॥ २६ ॥

हरीतकी धान्यतुषोदसिद्धा
सपिप्पलीसैन्धवहिङ्गुयुक्ता।
सोद्गारधूमं भृशमप्यजीर्णं
विजित्य सद्यो जनयेत् क्षुधाञ्च ॥ २७ ॥

---

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरण एवाजीर्णचिकित्सामाह वचेत्यादि वचालवणकल्कयुक्तेनोष्णोदकेन किम्वा वचया अर्द्धमृष्टेनोष्णोदकेन सलवणेन वमनम् ॥ २४ ॥

विदग्धाजीर्णचिकित्सामाह अन्नमित्यादि सुश्रुतस्य शीताम्बुना परिपाकमुपैति यदुक्तं तदेवोपपादयति तदस्येति, हिशब्दो हेतौ तदिति शीताम्बु, अस्याजीर्णिनः पित्तं निहन्तीत्यन्वयः। आक्लेदिभावादिति द्रवत्वात् ॥ २५ ॥

विदह्यत इत्यादि सुश्रुतस्य। भुक्तमात्रमिति मात्रशब्दः कार्त्स्न्ये, भुक्तमाकल्यं मात्राशब्दो वर्त्तते। किम्वा भुक्तमात्रमिति भोजनानन्तरम्। अन्नं विदग्धं हि नरस्य शीघ्रमित्यादि वाक्यं तथा विदह्यते यस्य तु भुक्तमात्रमित्यादि वाक्यं तथा भवेदजीर्णं प्रति यस्य शङ्का इत्यादि वक्ष्यमाणान्तं सौश्रुतवचनमनार्षम् अजीर्णे भोजननिषेधस्य स्वयमेव सुश्रुतेनोक्तत्वात्, लङ्घनाद्युपदेशाच्च, तत्र तत्र केनाप्यवैद्येन प्रकल्पितं योगत्रयमिदमित्याह जेज्जटः। अपरे तु प्रचारादृषिपाठदर्शनाच्च योगत्रयमेतदार्षं मन्यन्त एव, किन्तु स्वल्पाजीर्णे बोध्यमेतत्, प्रभूताजीर्णे तु भोजनमम्बन्धं न कुर्य्यात्, अल्पाजीर्णे तु औषधं सेव्यमिति ॥ २६ ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्व्वीत सर्व्वाजीर्णप्रणाशनम् ॥ ३० ॥
धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः।
आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ ३१ ॥
पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्च्चलं पिबेत्।
मस्तुनोष्णोदकेनापि बुद्ध्वा दोषगतिं भिषक्॥
चतुर्व्विधमजीर्णञ्च मन्दानलमथारुचिम्।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ ३२ ॥

अजीर्णी चेद्यस्य भवेत्तु शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्व्वं स शुण्ठीमभयामशङ्कः
संप्राश्य भुञ्जीत हितं हिताशी ॥ ३३ ॥

---

[illegible] कार्य्यः, यदाह [illegible] अमाल्पप्रत्याग [illegible] प्रातः सुअ [illegible]। [illegible]। [illegible] भुक्त्वा स्वप्नं नसेवेत ॥ २९ ॥

आलिप्येत्यादि सुगमम् ॥ ३० ॥

धान्यनागरेत्यादि।—[illegible] वा [illegible] वचनेन [illegible] तेनेति. [illegible] धान्यनागर- [illegible] पचेत् [illegible] धान्यं सार्द्ध [illegible] नागरन्तु [illegible]। यत्तु धान्यशुण्ठ्योः [illegible] शुण्ठ्या [illegible] धा [illegible] [illegible] के [illegible] वैद्य [illegible]स्तु शुण्ठ [illegible] [illegible] ॥ ३१ ॥

पथ्येत्यादि। [illegible], [illegible] कर्ष- [illegible] वचनात् ॥ ३२ ॥

अजीर्णीत्यादि। [illegible]। [illegible]जीर्णविषय [illegible] वाक्यम्। [illegible] दोषः तेन [illegible]औषधपूर्व्वं भोजनं [illegible]। पूर्व्वमिति [illegible]काले. यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत् [illegible] भोजनकाले तस्मिन् सशुण्ठीं शुण्ठी-

छायाविशुष्का गुडिकाः कृतास्ता-
हन्त्युर्विसूचीं नयनाञ्जनेन॥ ३८॥
गुड़पुष्पसारशिखरितण्डुलगिरि कर्णिकाहरिद्राभिः ।
अञ्जनगुड़िका विलयति विसूचिकां त्रिकटुसन तथा॥ ३९ ॥
त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः ।
उद्वर्तनं खल्ल्लीविसूचिकायां तैलं विपक्वञ्च तदर्थकारि॥४०॥
पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते ।

---

छायेत्यादि सुश्रुतस्य मातुलुङ्गो मधुककुगी, विसूचीशब्देनात्र विसूचीजनित मूर्च्छाप्रमीलकाशिरोरोगादयो गृह्यन्ते, कारणे कार्योपचारात्। किम्बा अञ्जनप्रभावादेव विसूची हन्यते। इति सुश्रुतटीकाकृतोव्याचक्षते॥ ३८॥

गुड़पुष्पेत्यादि गुड़पुष्पो मधुकवृक्षः, तस्य सारो रसः। शिखरि तण्डुला अपामार्ग वीजानि गिरिकर्णिका श्वेतापराजिता तस्या-मूलं ग्राह्यम्। त्रिकटुकान्त एकोयोगः। विलयति शमयति॥ ३९॥

त्वक्पत्रेत्यादि त्वक् गुड़त्वक्, पत्रं तेजःपत्रं अम्लपिष्टैरिति काञ्जिकपिष्टैः। शताह्वा शलुफा इति ख्याता शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति यथा रास्ना पत्रागुरु मांसीकुष्ठ शिग्रुवचोवचा। पिष्टमम्लेन तच्चूर्णं विसूच्यामङ्गमर्द्दनम्। सुश्रुते तु शतपुष्पी जटामांसीचेति द्वयं अपि न दृश्यते यथा कुष्ठशुक्तागुरुपत्रन्तु रास्ना शिग्रुं त्वचा वचा। पिष्टमम्लेन यच्चूर्णं विसूच्यामङ्गमर्द्दनमिति, तैलं विपक्वञ्च तदर्थकारीति, त्वक्पत्रादिभिः कल्की कृतैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्ल्लीविसूचीकाघ्नं भवतीत्यर्थः॥ ४०॥

पिपासायामित्यादौ ।– अनुत्क्लेशे वमनकाभिरुचा, ठिवरीतिलोके ख्याता इति निश्चलः, अन्येत्वनुत्क्लेश इतीपद्गुल्लष्ट दोष उत्क्लेशः। लवङ्गाम्बु एतयोर्त एवं जातिफलाम्बु भद्रघनाम्बु च कृतं भद्रघां भद्रमुस्तकं अत्रान्तरे रोगान्तरं दृष्टफलमत्रबोद्धव्यं ग्राम्याय तदिशष्यो मातुलुङ्ग फलत्वचं। पीत्वा भद्रघनकाथमनुत्क्लेशादिमुच्यते। पाण्डौदाहइति पाठः युगदाहन्त मूर्च्छाभ्रान्त्यर्दन्, कूर्च्चीकर कल-

जातीफलस्य वा शीतं श्टतं भद्रघनस्य वा ।
विसूच्यामतिवृद्धायां पार्ष्णिदाहः प्रशस्यते ॥ ४१ ॥
वमनं त्वन्तेपूर्व्वे लवणेनोष्णवारिणा ।
स्वेदोवर्त्तिलङ्घनञ्च क्रमश्चाग्निवर्द्धनः ॥
सरक्तचानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ४२ ॥
तक्रेण चूर्णं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात् ।
स्वेदोघटैर्वा बहुबाष्पपूर्णैरुष्णैस्तथान्यैरपिपाणितापैः ॥ ४
तीव्रार्त्तिरपिनाजीर्णी पिबेच्छूलघ्नमौषधम् ।
दोषाच्छन्नोऽनलोनालं पक्तुं दोषौषधाशनम् ॥ ४४ ॥

इत्यग्निमान्द्यादिचिकित्सा ।

---

गाभावे सति सरगरादि गलात्यया पाददाहः । सुश्रुतेप्युक्तं प्रशस्तं सुदमनमिति : चन्द्राटेप्युक्तं वृद्धायां विसूच्यां पार्ष्णिदेशे च दाह इति । अतः पार्ष्णिदेश इ अत्र पार्श्वदेश इति ये पठन्ति ते भ्रान्ताः । पार्ष्णिदाहस्य सर्वत्र विहितत्वात् ॥ ४१ ॥

अलसकचिकित्सामाह वमनमित्यादि लवणेन केवलेन, वर्त्तिरिति फलवर्त्तिः साचोदावर्त्ते वक्ष्यमाणा । अत दूत्यतऊर्द्धमित्यर्थः सरक्तिति सशूलं चैत्यनौ वचा ॥ ४२ ॥

तक्रेत्यादि । सक्षारमिति सयवक्षारं तत् सर्वं घटे कृत्वा उदरे स्वेदयेत् कश्चित्, तन्न चरकेऽस्य योगस्य प्रदेह प्रकरणे पठितत्वात् । तस्मात् यवचूर्णयवक्षारौ तक्रेण पिष्ट्वा किञ्चिदुष्णं कृत्वा उदरे लेपः कार्यः । स्वेदो घटैर्वा बहुबाष्पपूर्णैरिति सतप्तकाञ्जिकादिभिर्बाष्पपूर्णैर्घटैस्तथान्यैर्वा पुटादिभिस्तथा हस्ततापैरपि स्वेदः योज्यम् ॥ ४३ ॥

तीव्रार्त्तिरित्यादौ, ना पुरुषः । दोषाच्छन्न इति आमदोषाभिभूतः । नालमिति न समर्थः ॥ ४४ ॥

# अथ क्रिमिरोगाधिकारः।

पारसीययवानिकां पीतां पर्युषितवारिणा प्रातः।
गुडपूर्वां क्रिमिजातं कोष्ठगतं पातयत्याशु॥१॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत्।
केवुकस्य रसं वापि पत्तूरस्याथवा रसम्॥२॥
लिह्यात् क्षौद्रेण वैडङ्गं चूर्णं क्रिमिविनाशनम्॥३॥

मुस्ताखुपर्णीफलदारुशिग्रु
क्वाथः सकृष्णाक्रिमिशत्रुकल्कः।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान्॥४॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम्।
जग्ध्वा सौवीरकञ्चानुपिबेत् क्रिमिहरं परम्॥५॥

---

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह पारसीकेत्यादि। पारसीक यमानी खोरासानि यमानीति ख्याता। गुड[illegible] गुडः पूर्वो यस्या इति, गुडं भक्षयित्वा [illegible] मात्रा त्वस्याः कर्षः। पेयाणामपि पर्युषितवारिणेति॥१॥

पारिभद्रेत्यादि।— पारिभद्रकः मन्दारविशेषः। केवुकस्येति केमुकस्य केउताड़ा इति ख्यातस्य तस्य मूलस्वरसं ग्राह्यम्, एवं पत्तूरस्य पत्तूरः शालिञ्चः। क्षौद्रयुतमिति पदं केवुकरसे पत्तूररसेऽपि योज्यम्॥२॥

लिह्यादित्यादि स्पष्टम्॥३॥

मुस्तेत्यादौ।— आखुपर्णी मूषिकपर्णी, दण्डी भेदोऽयं, फलश-ब्देनात्र त्रिफला न ग्राह्या, रविगुप्तसंवादात्। क्रिमिशत्रुर्विडङ्गसारः॥४॥

आखुपर्णीदलैरित्यादि आखुपर्णी मूषिकपर्णी दण्डीभेदोऽयं मण्डूकपर्णीत्यन्ये, दलं कोमलदलं। यदाह वाग्भटः "आखुपर्णी किसलयैः सुपिष्टैः पिष्टमिश्रितैरिति" पिष्टकेनेति यवपिष्टकेन क्रिमिह-रत्वादिति सुश्रुतटीकाकृतः। शालितण्डुलपिष्टकेनेति निश्चलः। आः

विडङ्गघृतम्।

त्रिफलायास्त्रयः प्रस्था विडङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभतः समुपाचयेत्॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत्फलं क्रिमिनाशनम्॥
विडङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्व्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥११॥
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः॥१२॥
विडङ्गगन्धशिलासिद्धं सुरभीजलेन कटुतैलम्।
आजन्म नयति नाशं लिख्यासहितास्तु यूकास्तु॥१३॥

इति क्रिमिरोगचिकित्सा।



## अथ पाण्डुरोगाधिकारः।

साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम्॥१॥

---

त्रिफलादिघृतं॥११॥

रसेन्द्रेति यौकं यूकाघ्नम्॥१२॥

विडङ्गेत्यादौ।— शिला मनःशिलेति केचित्। अन्ये तु गन्धकं शिला मध्यकपाषाणमेव वदन्ति। सुरभीजलं गोमूत्रं तच्च चतुर्गुणं ग्राह्यम्॥१३॥

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगमाह साध्यमित्यादि सुश्रुतस्य समीक्ष्येति अनुबन्धानुबन्धरूपं तद्दोषविशेषयं सम्यगुपलभ्य स्निग्धमेव नस्विन्नं, पाण्डुरोगे स्वेदनिषेधात्। ... घृतस्यैव प्रधानत्वात् घृतेनैव स्नेहनं उक्तं घृतञ्च भेषजसंस्कृतमेव देयं बहुगुणत्वात्। उक्तं हि चरके कल्याणकं पञ्चगव्यं महातिक्त-

सम्पादयेत् क्षौद्रघृतप्रगाढ़ैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ २ ॥
पिवेद्‌घृतं वा रजनीविपक्वं सत्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्य कृतान् पिवेद्वा योगांश्च वैरेचनिकान् घृतेन ॥३॥
विधिः स्निग्धोऽथ वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ४ ॥

---

तथापि वा स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे इति । अन्ये तु स्नेहनेनैव घृतेनेत्याहुः । ऊर्द्ध्वमिति वमनेन, अधश्चेति विरेचनेन, यद्यपि पाण्डुरोगे वमनं निषिद्धं नवामयेऽतिसारिणं मत्तु(?)लिङ्गं नवापि पाण्डूदररोगपीडितमिति तथापि पीडितमिति वचनेन प्रवृद्धपाण्डुरोग विषयं तद्वचनं ज्ञेयम् । उपक्रमेत्तु कालन्तु दोषाद्यपेक्षया कफोद्रेकावस्थायां मृदु वमनं ज्ञेयम् । यथाच हारीतः कालन्तु दोष प्रकृतिं शरीरं समीक्ष्य दद्याद्‌वमनं विधिज्ञ इति । सुश्रुतेऽप्युक्तम् एतेष्वजीर्णे व्यथिता वम्यायेव विषातुराः । अतीव चोल्वनकफास्ते च स्युर्नं धुकाम्बुभिः(?)इति । विरेचनञ्च तीक्ष्णमेव तदुक्तं वाल्लस्थवीर्याण्यनुलोमनानि कल्पोपदिष्टानि भिषग्विदध्यादिति ॥ १ ॥

इदानीं संशोधनानन्तरं कृतसंसर्जनक्रमस्य दोषविशेषशमनार्थमाह सम्पादयेदिति ।—हरीतकी चूर्णमयैः क्षौद्रघृतैर्वाहुल्यादिभिर्हरीतकीचूर्णबहुलैरित्यर्थः । हरीतकीचूर्णयुतैरिति पाठान्तरम् ॥ २ ॥

रजनीविपक्वमिति । हरिद्राकल्कक्काथाभ्यामिति चन्द्रिका । तन्नु कल्कक्वाथकारणस्य गणं विषमत्वात्, तस्मात् हरिद्राकल्कसिद्धमित्यन्ये । अन्ये तु तत्कल्कमात्रसाध्यहरिद्राघृतमित्याहुः । त्रैफलमिति त्रिफलाक्वाथकल्कसिद्धं, त्रिफलाद्यपटोलपिचुमर्दं इत्यादि कुष्ठोक्तम्, नेत्ररोगोक्तं वा ज्ञेयम् । तैल्वकमिति वातव्याध्युक्तम् । विरेचनद्रव्य कृ-मिति त्रिवृदादिद्रव्यकृतं घृतम् इद द्विवाक्यं सौश्रुतम् । योगांश्च वैरेचनिकानिति सुश्रुतविरेचनाध्यायोक्तान् घृतेन पिवेदिति ॥ ३ ॥

दोषप्रत्यनीकांश्चिकित्सामाह विधिरित्यादि मिश्रक इति द्वन्द्वजे ॥ ४ ॥

अयस्तिलत्र्यूषणकोलभागैः सर्व्वैः समं माक्षिकधातुचूर्णम्।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः॥९॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रशोधितम्।
मधुसर्पिर्युतं चूर्णं सहतक्रेण योजयेत्।
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम्॥१०॥

नवायसं लौहम्।

त्र्यूषणत्रिफलामुस्तविड़ङ्गचित्रकाः समाः।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा।
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शः कामलापहम्॥११॥

---

अयस्तिलादौ।— कोलं शुष्कबदरं ननु कर्षार्द्धं यदाह सुदान्तसेनः, अयः शोधितञ्च व्योषैः समैर्माक्षिकधातुना। मधुना वटकान् कृत्वा जग्ध्वा तक्रं पिबेदनु इति। तिलोऽपि कृष्णः, माक्षिकधातुः स्वर्णमाक्षिकं तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौह प्रदीपादौ बोध्यं अनुतक्र इति अनुपानः॥ ९॥

अयोमलमित्यादि।— अयोमलं पुराणं मण्डूरं भूयो गोमूत्रशोधितमिति सप्तवारान्। मण्डूरचूर्णस्य माषकद्वयं त्रिधा विभज्य भोजनादिमध्यान्तेषु मधुसर्पिभ्यां लेह्यं पश्चादभ्यासक्रमेण माषकं वर्द्धयेत्। अनुपानमिह तक्रं दुग्धं वा॥१०॥

त्र्यूषणेत्यादि।— एकभागापेक्षया नवगुणं मण्डूरचूर्णं, आदौ रक्तिद्वयं घृतमधुभ्यां लौहपात्रे लौहमूषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं क्रमात् वृद्धिः कार्य्या माषकद्वयं यावदिति व्यवहारः। वाभटे तु तक्राद्यनुपानमुक्तं यथा व्योषाग्नित्रिफलाविडङ्गमुस्तैस्तुल्यमयोरजः। चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितमिति॥ एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम्॥११॥

योगराजः।

त्रिफलायास्त्रयोभागास्त्रयस्त्रिकटुकस्य च।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च॥
पञ्चाश्मजतुनोभागास्तथारूप्यमलस्य च।
माक्षिकस्य विशुद्धस्य लौहस्य रजसस्तथा॥
अष्टौ भागाः सितायाश्च तत् सर्व्वं सूक्ष्मचूर्णितम्।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे॥
उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना।
दिने दिने प्रयोगेण जीर्णे भोज्यं यथेप्सितम्॥
वर्ज्जयित्वा कुलत्थांश्च काकमाची कपोतकान्।
योगराज इति ख्यातो योगोऽयममृतोपमः॥
रसायनमिदं श्रेष्ठं सर्व्वरोगहरं परम्।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम्॥

---

त्रिफला इत्यादि।—चरकस्य त्रिफलायास्त्रयोभागा इति मिलित्वा त्रयोभागाः, एवं त्रिकटुकस्यापि, निर्द्देशस्य मानप्रधानत्वात्। चित्रक-विडङ्गयोरपि प्रत्येकं पलं। शिलाजत्वादिलौहचूर्णान्तानां प्रत्येकं पञ्च पलानि, शर्करायाश्चाष्टौ पलानि, शिलाजतु च शिवागुडिकोक्त विधिना ग्राह्यं, रूप्यमलस्येति रूपस्याव ध्माय मानस्य यत्किट्टं निर्गच्छति तद्रूप्यमलं माक्षिकस्येति मारणपुटनादिना शुद्धस्य स्वर्णमाक्षिकस्य अन्यत्र पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्येत्यत्र तथा रूप्यमलस्य इति पठन्ति। तेन रूप्य मलस्येति शिलाजतु विशेषणं, ततश्च रसायना-धिकारे राजतं कटुकं श्वे..मित्यादिना यच्छिलाजतु रूप्यमलत्वेनोक्तं तदिह गृह्यते इत्याहुः। एतत्तु न व्यवहरन्ति वृद्धाः भानटे तु लौहस्थाने रूप्यं पठितं यथा ताम्रादिरजतरूप्याद्यमलाः पञ्च पलाः पृथकः। चित्र-कत्रिफलाव्योषविडङ्गैः पलिकैः सह। शर्करापलोन्मिश्राश्चूर्णिता मधुना प्लुता इति। तदत्र प्रयोगे भेदाद्यौषधः उक्तं हि सुवर्णमथवा

कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ १२ ॥
विशाला कटुकामुस्तकुष्ठदारुकलिङ्गकाः ।
कर्षांशा द्विपिचुर्मूर्वा कर्षार्द्धा च घुनप्रिया ॥
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात्ततो मधु ।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तञ्च नाशयेत् ॥ १३ ॥
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः ।
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीड़ितः ॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा ।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ १४ ॥

---

क्वथं योगे यत्र न लभ्यते तत्र लौहेन कर्म्म स्यात् भिषक् कुर्य्याद्विचक्षण इति । पूर्व्वोक्तस्यास्यापि शिलाजतुलौहमलस्वर्णमाक्षिकलौहरजोभिश्चूर्णीकृतैरेव ह्यते तेन तन्त्रकार वचनयोर्न विरोध इति । उडुम्बरः कर्पः, अजरकं अजीर्णं । वराग्निरित्यत्र नागदुरुघः ॥ १२ ॥

विशालेत्यादि ।— विशाला गोरक्षकर्कटी. कर्षांशा च घुनप्रिया इत्यपपाठः किन्तु कर्षार्द्धांशेति । उक्तं हि चरके विशाला कटुकामुस्तकुष्ठदारुकलिङ्गकान् । कर्षोन्मितानतिविषां कर्षार्द्धाञ्च प्रदापयेत् कर्षौ मधुरसायाश्च सर्व्वं चूर्णं सुखाम्बुना पाययित्वा तं रसं पूतं पीत्वा लिह्यात्तु माक्षिकमिति अतएव वचनबलात् कल्ककषायविधानमप्यत्र योगे बोध्यं तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिश्चूर्णापेक्षया चतुर्गुणैर्मर्द्दयित्वा वस्त्रपूतं कृत्वा पिबेत् अनन्तरञ्च मधु लिह्यादित्यर्थः ॥ १३ ॥

लौहपात्र इत्यादि अत्र जलं चतुर्गुणं बोध्यं पाकानुपपत्तेः । कल्याणघृतं पञ्चगव्यघृतञ्च उन्मादे वक्ष्यति, महातिक्तञ्च कुष्ठे, रेचनञ्च पराहरत्वेन ॥ १४ ॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः॥
अञ्जनं कामलार्त्तस्य द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत्॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम्।

सशर्कराकामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी॥

दार्वीत्रिफलाव्योषविडङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान्॥१५॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा।
चूर्णिताः कामली लिह्यात् गुडक्षौद्रेण वाभयाम्॥
धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्कराः॥
लीढ्वा निवारयत्याशु कामलामुद्धतामपि॥१६॥
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुना चिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति॥१७

---

त्रिफलाया इत्यादि स्पष्टम्। अञ्जनमित्यादि अञ्जनं नेत्राञ्जनं द्रोणपुष्पी दण्डकलस इति केचित्। निशादिभिश्चूर्णाञ्जनं कार्यं तदुक्तं तन्त्रान्तरे निशागैरिकधात्रीणां चूर्णैर्वाञ्जनम् मतम्। एतच्च मध्वक्तशलाकया कार्यमित्याहुः। नस्यमित्यादौ। कर्कोटमूलमिति कर्कोटमूलरसस्य नस्यम्। जालिनी पीतघोषकः। सशर्करेत्यादि सुश्रुतस्य। त्रिभण्डी त्रिवृत्, देवनागरेऽपि रोगः। गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये, अत्रापि सशर्करेत्यादि योज्यमित्याह निश्चलः। कार्त्तिकस्तु सगुडा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी सगुडा इति व्याख्याय गवाक्षीमपि सगुडामाह। एवं सुश्रुतटीकायां उल्लनोऽपि व्याख्यातवान्। दार्वीत्यादि चरकस्य दार्वीत्वक्॥१५॥

तुल्या इत्यादि। स्पष्टम्। धात्रीत्यादि। स्पष्टम्॥१६॥

दग्ध्वेत्यादि। सुश्रुतस्य। अक्ष इति विभीतकवृक्षः सुश्रुते वज्र:

पाण्डुरोगक्रियां सर्व्वां योजयेच्च हलीमके ।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥ १८ ॥

विडङ्गाद्यं लौहम् ।

विडङ्गमुस्तत्रिफलादेवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद्दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्नोति चिरात् ॥ १९ ॥

त्र्यूषणादिमण्डूरम् ।

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्व्वीत्वङ्माक्षिकोधातु ग्रन्थिकं देवदारु च ॥

---

पुस्तकेषु चन्द्रटादिषु गोमूत्र निर्व्वापितमण्डूरं त्रिःसप्तवार मित्येव पाठो दृश्यते अन्ये तु गोमूत्रे निर्व्वापितमण्डूर त्रिःसप्तवार मित्येवं पठन्ति ॥ १७ ॥

पाण्डुरोगकामलाचिकित्सां हलीमकेऽप्यतिदिशति पाण्डुरोगेत्यादि, क्रिया विरेचनादिरूपा ॥ १८ ॥

विडङ्गलौहे तुल्यमात्रमयश्चूर्णमिति मिलितविडङ्गचूर्णादि सर्व्वचूर्णसममयश्चूर्णमित्यर्थः । अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणं गोमूत्रं लौहचूर्णं पक्वावतारिते च विडङ्गादिचूर्णस्य प्रक्षेप इति केचित् । अन्ये तु विडङ्गादिचूर्णयुक्तस्यैव लौहचूर्णस्य पाकः, गोमूत्रं चाष्टगुणत्वं सर्व्वचूर्णापेक्षयैव । अत्र द्रवद्वैगुण्यं न व्यवहरन्ति वृद्धाः । पाकश्चात्र मुद्रापाकेनेत्याहुः । अक्षमात्रां गुडिकां कुर्य्यात् ततस्तन्मात्रां खादेत् । मात्रा, देहादिबलापेक्षिणी, अतएव तुल्या विभज्य कर्त्तव्या ॥ १९ ॥

त्र्यूषणेत्यादि । चरकस्य । दार्व्वीत्वगिति पर्य्यायात्र मत दार्व्वीत्वक् चेति तार्थं दार्व्वीत्वचं चेदमिति बाभटव्याख्यानम् । ग्रन्थिकं पिप्पलीमूलं । एभिस्त्रयोदशभिर्द्रव्यैः पृथक् द्विपलैः षड्विंशतिपलानि भवन्ति । मण्डूरस्य चूर्णाद्द्विगुणत्वात् षट्पञ्चाशत्पलमात्रं भवति । गोमूत्रस्य मिलित चूर्णापेक्षयाष्टगुणत्वम्, पञ्चोर्द्ध्वभागत्वेन द्वैगुण्यकल्पनादि । अन्ये तु मण्डूराष्टगुणं प्रक्षेप्य मण्डूरापेक्षयैव वदन्ति ।

### पुनर्नवामण्डूरम् ।

पुनर्नवात्रिवृच्छुण्ठीपिप्पलीमरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफला द्वे हरिद्रे च दन्ती च चविकन्तथा ।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत् ॥ २१ ॥

### मण्डूरवज्रवटकः ।

पञ्चकोलं समरिचं देवदारुफलत्रिकम् ।
विडङ्गं मुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान् गुडकान् पिबेत्तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्येषमन्दाग्नित्वमरोचकम् ॥
अर्शांसि ग्रहणीदोषमुरुस्तम्भमथापि वा ।
क्रिमिप्लीहानमुदरं गलरोगञ्च नाशयेत् ।
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥ २२ ॥

---

इत्येष पाठोऽलिखितः । यतो दीपिकायां मण्डूरापेक्षयैवाष्टगुणत्वं, तेनायमेव पाठः प्रतिभातीति वदता स्वीकृतम् । गोमूत्रं सर्वं चूर्णत इति टीकेऽपि प्रति संस्कृत्य लिखितम् ॥ २० ॥

पुनर्नवामण्डूरे, गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैवर्षिविहितत्वात् व्यवहाराच्च, अत्रापि द्वैगुण्यं न व्यवहरन्ति ॥ २१ ॥

मण्डूरवज्र वटके, विडङ्गमुस्तयुताश्च भागास्त्रिपलसम्मित इति पञ्चकोलादि भागा विडङ्गमुस्तसहितास्त्रिपलसम्मिता इत्यर्थः । अत्रापि मण्डूरापेक्षयैवाष्टगुणत्वं मूत्रस्य, अद्वैगुण्यञ्च पूर्ववत् ॥ २२ ॥

धात्र्यरिष्टः।

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुडवान्वितम्॥
शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः॥
कामलापाण्डुहृद्रोगवातासृक् विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत्॥ २३॥

द्राक्षाघृतम्।

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः॥ २४॥

हरिद्राघृतम्।

हरिद्रात्रिफलानिम्बबलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ २५॥

मूर्व्वाद्यं घृतम्।

मूर्व्वातिक्तानिशायासकृष्णाचन्दनपर्प्पटैः।
त्रायन्ती वत्सभूनिम्बपटोलाम्बुददारुभिः॥

---

धात्रीफलेत्यादि। चरकस्य। क्षौद्राष्टभाग इति क्षौद्रस्याष्टमो-भागः, तेनामलकस्वरसस्य अष्टभाग इति सिध्यति, शर्करार्द्धतुला पञ्चाशत् पलानि, अर्द्धपलेति लेखकदोषात् प्रमादः पाठः॥ २३॥

पुराण सर्पिषइति पुराणं दशवर्षस्थितं सर्पिः, जलमत्र चतुर्गुणमर्थात्। अन्ये तु पिष्टा गोस्तनिकायास्तु पलान्यष्टौ समावपेत् पुराण सर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणमिति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः॥ २४॥

हरिद्रेत्यादौ क्षीरं चतुर्गुणम्॥ २५॥

मूर्व्वाघृते वत्सकेन वत्सकफलं ग्राह्यम्॥ २६॥

अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम् ।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत् ॥ २६ ॥

व्योषाद्यं घृतम् ।

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवा ।
मुस्तान्ययोरजः पाठाविडङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैर्घृतं शृतम् ।
सर्व्वान् प्रशमयत्येतद्विकारान्मृत्तिकाकृतान् ॥ २७ ॥

इति पाण्डुरोगकामलाहलीमकचिकित्सा ।

## अथ रक्तपित्ताधिकारः ।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽश्नतश्च यत् ।
तत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत् ॥
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्व्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥

---

व्योषमित्यादि । वाभटस्तु [illegible] गजादुः [illegible] प्रादिशोऽत्र पाठं वृश्चिकाली [illegible] चतुर्गुण [illegible] । अत्रत्वनु क्षीरं घृत समं [illegible] चतुर्गुणमिति [illegible] ॥ २७ ॥

पाण्डुरोगवत् रक्तपित्तेऽपि [illegible] पाण्डुरोगानन्तरं रक्तपित्तमाह नोद्रिक्तमित्यादि । -- नोद्रिक्तमित्यादि [illegible] बलिनः [illegible] प्रभूतं, [illegible] तद् [illegible] । आदौ संग्रहणे दोषमाह तत्पाण्डुरित्यादि । - रोग[illegible] ग्रहणीदोषः [illegible] । ऊर्द्ध्वं प्रवृत्तदोषस्येत्य[illegible] । - [illegible] दोषस्येति पाठान्तरम् । अपतर्पणं लङ्घन[illegible] चरके रक्तपित्ते [illegible] अपि तु [illegible] प्रायेणोर्द्ध्वगुणानां[illegible]

शालपर्ण्यादिना सिद्धा पेया पूर्व्वमथोगमे ॥ ४ ॥
वमनं मदनोन्मिश्रोमन्थः सक्षौद्रशर्करः ॥ ५ ॥
शालिषष्टिकनीवारकोरदूषप्रशातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मसूरमुद्गचणकाः समुद्गष्टाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥
शाकं पटोलवेत्राग्रतण्डुलीयादिकं हितम् ।
मांसं लावकपोतादिशशैणहरिणादिकम् ।
विनायुशठौ षड़ङ्गेन सिद्धं तोयश्च दापयेत् ॥ ६ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवम्यमविरेच्यञ्च लम्भनैः समुपाचरेत् ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत्तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ७ ॥

---

शालपर्ण्यादिना सिद्धेति शालपर्ण्यादि स्वल्पपञ्चमूलं तथातिसारे उक्तौ दौच स्वल्प महद्भेदात् एवं शालपर्ण्यादि लयमेव दोषाद्यपेक्षया देय मित्याहुः । व्यवहारस्तु प्रायः स्वल्प पञ्चमूलेनेति ॥ ४ ॥

वमनमिति ।—मन्थोद्रवद्रव्यालोड़िताः शक्तवः ॥ ५ ॥

शाल्यादौ नीवार उड़िया, कोरदूषः कोद्रवः सचेह पुरातनो ग्राह्यः तेन कोरदूषस्य यद्रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं तदभिनवाभिप्रायेणेति केचित् । अन्ये तु निष्पावमाषपूपादि युक्तस्यैव कोरदूषस्य संयोगमहिम्ना रक्तपित्त हेतुत्वं निदाने प्रोक्तं केवलस्य तु कषाय मधुरलघुत्वात् रक्तपित्तहन्तृत्व मेवाहुः । प्रशातिका रक्तशूका, रक्त उड़िया इति ख्याता, सा जलमध्ये प्रायो भवति । प्रियङ्गुः कङ्गुः काङ्गनीति लोके । आढ़की तुवरी । विनायुशठ्योत्यादि स्पष्टम् ॥ ६ ॥

निषिद्ध वमन विरेचनमाह क्षीणेत्यादि । शोषानुबन्धिनं यक्ष्मानुबन्धयुतम् लम्भन योगानाह वृषेत्यादि वृषस्य पत्राणि पुटपाकविधिना उद्धृत्य ततोरसोग्राह्यः । अन्यथा तत्पत्रस्वरसोदुर्ल्लभो भवति । कल्प योगग्रन्थे बोध्य इत्याहुः । योगेयं मधुशर्कराद्य-

आटरूषकनिर्य्यूहे प्रियङ्गुमृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ८ ॥

वासाकषायोत्पलमृत्प्रियङ्गुः
लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिता क्षौद्रयुता निहन्यात्
पित्तासृगोवेगमुदीर्णमाशु ॥ ९ ॥

तालीशचूर्णसंयुक्तः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वासस्वरभेदरक्तपित्तहरः ॥ १० ॥
आटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कसनश्वासरक्तपित्तनिवर्हणः ॥

---

विशेषेण तत्कृत कषायेणापि बोध्यः यदाह वाग्भटः पित्तासृक् शमयेत् पीतो निर्य्यासो वाटरूषजः शर्करामधुसंयुक्तः केशलोधाम्बुतोऽपि वा ॥ ७ ॥

आटरूषकनिर्य्यूह इत्यादि । आटरूषो वासकः, मृत्तिका सौराष्ट्रीमृत् तदभावे पङ्कपर्प्पटी, अञ्जनं रसाञ्जनं, क्षौद्रान्तः प्रयोगः । उक्तञ्च वाग्भटे वासारसेन फलिनीमृद्लोध्राञ्जनाञ्जितं, पित्तासृक् शमयेत् पीतमिति । विनीय कल्कीकृत्य प्रक्षिप्येति वा । प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषायत्वात् । उक्तं ह्यग्निवेशेन कर्षश्चूर्णस्य कल्कस्येत्यादि तथा क्षौद्रघृतादीनामित्यन्ये त्वाहुः । चूर्णादीनां कर्षमानत्वं स्वतन्त्रप्रयोग एव भवति । यदि पुनरत्रोक्तपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते तदा भेषजभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं युक्तं भवति व्यवहारस्तु प्रियङ्ग्वादिकल्कक्षौद्रयोः प्रत्येकं चतुः पञ्च माषकं प्रक्षेप इति ॥ ८ ॥

वासाकषाय इत्यादि ।— सुश्रुतस्य । उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः । निश्चलस्तु सितामधुनोः प्रत्येकं शाणः, उत्पलादीनां मिलित्वा शाण इत्याह ॥ ९ ॥

तालीशेत्यादि ।—अत्र वासकस्वरसस्य पलं, तालीशचूर्णस्य माषकद्वयं मधुमाष चतुष्टयमिति व्यवहरन्ति ॥ १० ॥

आटरूषकेत्यादि चरकस्यायं योगोनार्ष इति जेज्जटः, इमतेतु

पक्वोडुम्बरकाश्मर्य्यपथ्या खर्ज्जूरगोस्तनाः ।
मधुना घ्नन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥
अट्रूषाखोटकत्वग्र सर्पिर्द्वितययुक्तो द्विगुणित घृतः ।
भुनिम्बकल्क ऊर्द्ध्वगपित्तास्रकामश्वासघ्नः ॥ १४ ॥
खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णान्तु मधुना लीढ्वा चारोग्यमश्नुते ॥ १५ ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता ।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ १६ ॥
वासकस्वरसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत् ।

---

पक्वोडुम्बरेत्यादि । उडुम्बरादीनां फलानि पक्वानि, ततस्तेषां चूर्णानां मधुना लेहः । काश्मर्य्यं गाम्भारीफलं खर्ज्जूरं पिण्डखर्ज्जूरं गोस्तना द्राक्षा । मधुनेत्यादेर्देवादपाप्तौ अनार्द्रत्वे वा, कल्कत्व शार्करं जलं रक्तमेनरक्षं बदर्य्यादिकुसुमसम्भवम्बा ग्राह्यमित्यर्थः । नासाप्रह मतभिषेऽपि पक्वोडुम्बरफलं मधुना गुड़ेनच दृश्यते उक्तं हि तन्त्रकारे "उडुम्बराणि पक्वानि गुड़ेन मधुनापि वा । उपयुक्तानि निघ्नन्ति नासारक्तं क्षणां ध्रुवमिति ।" अट्रूषेत्यादि अट्रूषकत्वः ॥ १४ ॥

खदिरस्येत्यादि । चरकस्य । चरकेतु पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुदिति पाठः, टीकाकारोऽपि चूर्णानि तस्य रक्तपित्तनुदिति विशेषणं नोपपद्यत इतिकृत्वा पुरुषविशेषणात्वमाह । संग्रहकारैश्च पुष्पचूर्णानि मधुना लीढ्वा चारोग्यमश्नुते इति प्रति संस्कृत्य लिखितम् । अथवा पुष्पचर्णं लेहेऽयन्तः । वमत्यय नत्वेन निर्देशादिति वृन्दटीकायां, किन्तु चरकटीकाकृद्भिर्नव्याख्यातोऽयमर्थः ॥ १५ ॥

अभयेत्यादि । अयं योगो यद्यपि पक्वोडुम्बरकाश्मर्य्यादियोगमध्ये पठितएव तथापि फलविशेषकथनार्थमिह पुनरुक्तम् ॥ १६ ॥

वासकस्वरसइत्यादि कृष्णाच वासकस्वरसे भावितेति योज्यं, भावनाच सप्ताहं उक्तं हि चन्द्रटे दिवादिवातपे शुष्कं रात्रौ रात्रौच

फावनायां द्रवोद्देशः सम्यगार्द्रत्वकारकः ॥ १७ ॥

एलादिगुडिका ।

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा ।
सिता मधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुनायुक्ता गुड़िकाः कारयेद्भिषक् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्द्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ १८ ॥
लोहगन्धिनि निश्वासे उद्गारे रक्तगन्धिनि ।
पृथ्वीकां शाणमात्रान्तु खादेद्द्विगुणशर्कराम् ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं सुलघु पिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्द्धि प्रलेपनं ॥
घ्राणप्रवृत्ते जलमेव देयं सशर्करं नासिकया पयो वा

वासयेत् शुष्कं चार्द्रितं द्रव्यं समार्द्रं भावनाविधिः । द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् । तावत्प्रमाणं निर्द्दिष्टं भिषग्भावनाविधाविति ॥ १७ ॥

एलेत्यादि चक्रपाणि. चरकस्य । अर्द्धाक्षा इति प्रत्येकं कर्षार्द्धमानाः । एवं सितादयश्च प्रत्येकं पलोन्मिताः । मध्वादि । यावता मधुना गुड़िका भवति तावन्तं मधु देयम् । आढ्यवातं वातरक्तं कफवातमित्यन्ये ॥ १८ ॥

पृथ्वीकां शाणमात्रामिति पृथ्वीका कृष्णजीरकं नतु स्थूलैला, एलायाः क्षयकासास्त्रावाद् । शाणोऽक्षचतुर्थं, कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेपि द्विगुणशर्करा योगात् प्रभावाद्वा पित्तहन्तृत्वम् । नासेत्यादि आमलकं घृते भृष्टा काञ्जिके पिष्टा शिरसि लेपो देयः । घ्राणप्रवृत्त इत्यादि चरकस्य । जलादयः सशर्करा पञ्चनस्ययोगा इति गय-

विपचेत् कार्षिकैरेतैः सर्पिरानं सुखाग्निना ।
तण्डुलाम्बुत्वगाक्षीरं दत्वा चैव चतुर्गुणम् ॥
तत्पानं वमतोरक्तं मावमं नासिकागते ।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत्तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्म्म सुयोजयेत् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ २१ ॥

शतावरीघृतम् ।

शतावरीदाडिमतिन्तिडीकं काकोलीमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत्क्षीरचतुर्गुणं ज्ञः ॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्यात् ॥ २२ ॥

बृहच्छतावरीघृतम् ।

शतावर्य्यास्तु मूलानां रसप्रस्थद्वयं मतम् ।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।
काकोली क्षीरकाकोली मृद्वीका मधुकन्तथा ॥

---

दूर्वाद्ये तु शीतं श्वेतचन्दनमिति वृन्दः । अन्ये तु चन्दनत्वचं समङ्गात्वगित्याहुः । त्वगामाणामेव रक्तशालादौ शीतसंज्ञकत्वेनोक्तत्वात् । व्यवहारस्तु प्रायः श्वेतचन्दने नेति । तण्डुलाम्बु त्वक्क्षीरञ्च प्रत्येकं चतुर्गुणं दत्वा चैवेति चरकादित्याहुः ॥ २१ ॥

शतावरीत्यादि ।— चरकस्य । केचिदत्र दाडिमफलं, धौतत्वपत्रमित्याहुः । तिन्तिडीकं महाद्रुकं, काकोलीत्युक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः, किम्बा काकोली शब्दः, प्रथमैकवचनान्तः स्त्रीलिङ्गशब्दः मेदे इति मेदाद्वयं, तन्त्रान्तरप्रमाणात् उक्तं हि काकोली मधुकं मेदे तिन्तिडीकं सदाडिमं शतावरी विदारीञ्च बीजपूरजटान्विताः पिष्टा चतुर्गुणे तोये पक्वमाज्यं ज्वरापहमिति ॥ २२ ॥

शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काद्धत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ २४ ॥

कामदेवघृतम् ।

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरी विदारी च शालपर्णी बला तथा ॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मरीफलमेतत्तु माषबीजं तथैव च ॥
पृथग्दशपलान् भागां चतुर्द्रोणेऽम्भसः पचेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा ॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः ।
पृथक्कर्षसमञ्चैव शर्करायाः पलद्वयम् ॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं तथा शोषं वर्णभेदं स्वरक्षयम् ॥

---

भिधानं तत्तु नस्यविषयं ज्ञेयम् । सक्षौद्रमिति कल्कपञ्चमधुगकं देयमिति वचनेन घृतात् पादिकं ज्ञेयम् । अन्ये तु कल्कमध्यमधुशर्करादेयमि-देनवलात् कल्कसमा चतुःपलत्वात् मधुनोऽपि चतुःपलत्व माहुः । अत्रकेचिच्चरके वामकं रं पित्तमवञ्च शूलं गुल्मं यकृत्प्लीहगदांश्च हन्तीति फलचतुष्कं पठन्ति । वाभटेप्युक्तं पित्तगुल्मयक्ष्मकासमारुतहृद्ग्रहकामला. शिशिर ज्वर वीसर्पस्वरभेदांश्च नाशयेत् ॥ २४ ॥

अश्वगन्धेत्यादौ तदर्द्धमिति गोक्षुरस्य पञ्चाशत् पलानि, शता-वर्य्यादीनां दशानां प्रत्येकं पञ्चाशत् पलानीत्यर्थः अश्वत्थ शुङ्गादी-नाञ्च पञ्चानां पृथक् दश पलानि ततोमिलित्वा पलशतचतुष्टये काथ्ये

त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम् ।
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेन्मुहुः ॥
तत्पक्वं स्थापयेद्भाण्डे दत्वा क्षौद्रं घृतार्द्धकम् ।
तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी ।
कासश्वासतमश्छर्द्दितृष्णाज्वरनिपीड़ितः ॥
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ।
उरःसन्धानकरणं बृंहणं स्वरबोधनम् ॥
अश्विभ्यां निर्म्मितं सिद्धं कूष्माण्डकरसायनम् ।
खण्डामलकमानानुसारात् कुष्माण्डकद्रवात् ॥

---

गृहीत्वा पक्तव्यम् । द्वे पले जीरकस्य चेति कणाशुण्ठ्योः प्रत्येकं पलद्वयं, जीरकस्य च द्वे पले तन्त्रान्तरसम्मतञ्चैतत् तद्यथा "द्विपलांशैः कणाशुण्ठीजीरकैरवचूर्णितैः" इति । वैद्यप्रसारकेऽप्येवमेवोक्तम् । व्यवहारोऽप्येवमेव । अन्ये तु पलार्द्धिकमिति पदेन सम्बन्धात् जीरकस्य पलार्द्धमित्याहुः । तन्न तन्त्रान्तरविरोधात् त्वगादीनान्तु पञ्चानां प्रत्येकं पलार्द्धम् । आयुर्वेदसारेऽप्युक्तं कूष्माण्डकानां रूढ़ानां स्विन्नं शत-पलं पचेत् । प्रतप्ते हविषः प्रस्थे मधुवर्णेऽवतारिते । खण्डाच्छतं कणा-जाज्यो द्विपलं नागरादपि धान्योपयं त्रिगन्धञ्च पृथगर्द्धपला-शिकम् । घृतार्द्धं माक्षिकोपेतं तत्खादेद्रक्तपित्तजिदिति । घृतार्द्धमिति प्रस्थार्द्धमानमित्यर्थः । खण्डामलकमानानुसारादित्यादि — खण्डामलके कूष्माण्डतुलार्द्धे कूष्माण्डस्वामलकरसयोः प्रत्येकं प्रस्थ इत्युक्तः, तेन कूष्माण्डशतपलेऽपात्रमिति द्विगुणत्वेन प्रस्थचतुष्टयं दातव्य-मित्यर्थः । पक्षान्तरमाह यावान् यावद्रसो भवतीति । स्विन्नकूष्माण्ड-स्यातिपीड़नेन यावान् रसो भवति तावतैव पाक इत्यर्थः । व्यवहारोऽप्य-नेनैव । यत्तस्यायं पक्षः, उक्तं हि तन्त्रान्तरे वृद्धं पुराणञ्चापि कूष्माण्डं कठिनं दृढम् । त्वक्शिराभ्यां विनिर्मुक्तमन्तर्बीजं स्विन्नं सुपिष्टं दृषदि वस्त्रेणैव प्रपीड़ितम् । विशुष्कमातपे किञ्चित् पाद्यं [illegible]-[illegible] । औदुम्बरकटाहेन पचेत् प्रस्थं च सर्पिषः । कृत्वा क्षौद्र-सिद्धं तस्मिन् क्षिपेत् खण्डशतं भिषक् । कुष्माण्डपीड़नात्तोयं यत्तेन

पात्रं पाकाय दातव्यं यावान् वात्तरसो भवेत्।
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम्॥२७

वासाखण्डकुष्माण्डकः।

पञ्चाशत्पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः।
प्रस्थं पलशतं खण्डं वासाक्वाथाढके पचेत्॥
मुस्ताधात्री शुभाभार्गी त्रिसुगन्धैश्च कार्षिकैः।
ऐलेय-विश्व-धन्याक-मरिचैश्च पलांशिकैः॥
पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत्।
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्॥
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति॥२८॥

---

विध्येत् पुनरिति। मुद्रापाक इत्यादि अङ्गुलिपीडनजन्यं चिह्नं मुद्रा, तया पाकोऽन्वयः। एतच्चोपलक्षणं, तेनान्यदपि पक्वलक्षणं ज्ञेयम्॥२७॥

पञ्चाशत्पलमित्यादि। अत्रापि पूर्ववत् स्विन्नं, संस्कृत, कुष्माण्डात् पञ्चाशत् पलम्। नचात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्तत्वात्। वासायास्तुःषष्टि पलानि जलस्यापि चतुःषष्टि शरावाः स्थाप्यन्ते षोडश शरावरूप माढ़कम्। शुभा वंशलोचना, ऐलेयं एलवालुकं, मधुमानीति मधुनोऽष्टौ पलानि। अत्र केचित् मानिकायां द्वैगुण्यमिच्छन्ति, किन्तु मानिका कुड़वौ चेति या वा संख्या पलैःकृता। आर्द्रे द्रव्ये द्रव्ये चैव न तत्र द्विगुणं विदुरिति वचनात्, तथाचारपाणि वचने मानिकाष्टौ पलान्येवेत्यवधारणदष्टावेव पलानि नतद्द्वैगुण्यात् षोडश पलानीत्यर्थः। चरकेऽपि पूर्णं शरावमित्यत्र पूर्णपदेन शरावे द्वैगुण्याभावः सूचितः तथाहि पूर्णपदं द्वैगुण्य प्रतिषेधपरं अन्यथा पूर्णपदं व्यर्थं स्यात्। चक्रस्तु मानिका कुड़वौ चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमाशङ्क्य मानिकायां द्वैगुण्य मिच्छन् चरकोक्त लशुनादिघृते मानिकया षोडश पलत्वं व्याख्यातवान्॥२८॥

### वासाखण्डकः ।

तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धं तथा शतम् ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥
कुड़वं पलमात्रन्तु चातुर्जातं सुचूर्णितम् ।
निम्बा विलोड़ितं खादेद्रक्तपित्ती क्षतक्षयी ॥
कासश्वासपरीतश्च यक्ष्मणा च प्रपीड़ितः ॥ २८ ॥

### खण्डकाद्यो लौहः ।

शतावरीच्छिन्नरुहा वृषमुण्डितिकावला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्गी पुष्करमूलञ्च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥

---

तुलामादायेत्यादि । अत्रार्द्रा वासा एव सर्वत्र, निम्बादिकमपि. उक्तं हि वासा निम्ब पटोल बलाकुष्माण्डकेन्दीवरो । वर्षाभू दुग्धजाश्वगन्धसहिते द्वे पूतिगन्धामृते । म गं नागवला सहचर पुरो छिद्र्यार्द्रके नित्यशोघ्याह्याद्यास्तत्क्षणोत्र नद्विगुणिता ये चेक्षुजानाघनाः । अष्टगुणे जल इति शरावगते नात्र द्विगुणत्वं, न द्वैगुण्यं तुला भागे पलोन्नत्वागते तथा इत्युक्तेः । पादशेषाञ्च पञ्चविंशतिशरावः चूर्णानामिति हरीतकी चूर्णानामाढ़कं चतुःषष्टि पलानीत्यर्थः प्रायो न पाकश्चूर्णानामिति प्रायः शब्दात् पाकोऽप्यस्तीति सूचयति । तेन चूर्णानां पाकोऽपि न विरोधः । चातुर्जातक पलमात्रमिति प्रत्येकं पलमात्रं निर्दिष्टस्य मानप्रधानत्वात् ॥ २८ ॥

खण्डाद्यं लौहमाह शतावरीत्यादि । छिन्नरुहा गुडूची । वृषो वासकः. मुण्डितिका मुण्डिरी, गायत्री खदिरः, त्रिफलयास्त्वच इति निर्दिष्टत्रिफलायाः, द्रव्योपचिमंच दि गा. . . गामनाख्या. माक्षिकं स्वर्णमाक्षिकं मनःशिला स्वर्णमाक्षिकाभ्यां प्रत्येकं निर्नित्वा वा. प्रक्षिप्य शोधितं लौहं . . . णीयं । खण्डतुल्यमितिच्छेदः, तेन खण्डस्यापि

दिव्यौषधहतस्यापि माक्षिकेन हतस्य वा।
पलद्वादशकं देयं रुक्‌मलौहस्य चूर्णितम्॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः।
पचेत्ताम्रमये पात्रे गुड़पाको यथामतम्॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्।
शृङ्गीविड़ङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम्॥
त्रिफलाधान्यकं पत्रं द्वाक्षं मरिचकेशरम्।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत्॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः॥
गुरुवृष्यानुपानानि स्निग्धं मांसादि बृंहणम्।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन्।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा॥
आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम्॥

---

द्वादश पलानि। केचित्तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति [illegible] सह खण्डतुल्यमिति योजयन्ति। तत्तु न सम्यक् यतः लौहयोगत्वात् [illegible] लौहप्राधान्येन तन्मानापकर्षस्यानुचितत्वात्, रक्तपित्त प्रत्यनीकत्व [illegible] एव महार्घिकत्वात् विशेषतो रक्तपित्तहरम्। [illegible] पुटादि भावितत्वेन महावीर्यकतयोपपन्नम्। व्यवहारस्तु [illegible]। प्रस्थार्द्धमिति षोड़श पलानि, शुभा वंशलोचना, अश्मजतुकं शिलाजतु, त्वक् गुड़त्वक्, शृङ्गादीनां जीरकान्तानां प्रत्येकं पलं, त्रिफलादीनां केशरान्तानां प्रत्येकं द्वयं कर्षद्वयमित्यर्थः। [illegible] कर्षः तत्तु पूर्वयुग पुरुषाभिप्रायेण मानमुक्तं व्यवहारस्तु [illegible] ततः पञ्चमाषादारभ्य रत्तिद्वयवृद्ध्या माष चतुष्टयं यावत् [illegible]। गव्यक्षीरानुपानमिति [illegible] चतुःषष्टि

आरोग्यं पुष्टिदं श्रेष्ठं मामाग्निबलवर्द्धनम्।
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम्॥
छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत्॥
नारिकेलपयः पानं सुनिषन्नकवास्तुकम्।
शुष्कमूलकजीराख्यं पटोलं बृहतीफलम्॥
फलं वार्त्ताकुपक्वाम्रं खर्ज्जूरं स्वादु दाड़िमम्।
ककारपूर्व्वकं यच्च मांसञ्चानूपमम्बुजम्॥
वर्ज्जनीयं विशेषेण खण्डकाद्यं प्रकुर्व्वता।
लौहान्तरवदत्रापि पुटनादि क्रियिष्यते॥२०॥
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत्॥२१॥

इति रक्तपित्तचिकित्सा।

---

शृणं, लौहान्तरे तथा दर्शनात्। उक्तं हि "अनुपानं चतुःषष्टि शृणं प्रहुः सदा बुधाः। जीराख्यमिति जीराख्यशाकं मारिशाकारं चम्पकादौ जीरेति ख्यातम्। ककारपूर्व्वकमिति विहितान् क्रकरकुरङ्गकृष्णसारान् विहाय दद्यात्। ककार पूर्व्वकं कपोतकर्कोटादि तत्परित्याज्यम्। अमृतसार लौहवदत्रापि वनिमन्थादि ज्ञेयं मधुघृत मर्दनादिकञ्च। अत्र केचित् गन्धकाभ्रकयोगं कुर्व्वन्ति एतदनुकूलञ्च वचनं पठन्ति। न रसेन विना लौहं भस्मकञ्चाभ्रकं विनेति। तथा चपलेन विना लौहं यः करोति पुमानिह। उदरे तस्य किट्टानि जायन्ते नात्र संशय इति। एतत्तु न व्यवहारयितुम्। यतः रसाभ्रकन्वितलौहप्रयोगस्य प्रशस्ततापतिपादनार्थं तदाभ्रकशून्यलौहे क्रिमिकिट्टादि व्यापच्छङ्का निरपेक्ष्यं भस्मकस्यापरस्य लेपनार्थेषु फलातिशय प्रतिपादनार्थमपि चतुः भस्मलौहे श्वावकानुर्यनि. . पठितम्॥ पुमानिहेति, इह शास्त्र वचनद्वयमपालैव बोध्यं नान्यत्र। अन्यथा सामान्यत एव परिभाषितमिद स्यादिति॥२०॥ इति रक्तपित्ताधिकारः।

तेन पादावशेषेण घृतस्यार्द्धाढकं पचेत्।
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली:॥
द्विपलिका: पृथग्दद्याद्यवमान्या: कुडवस्तथा।
त्रिंशद्गुडपलान्यत्र तैलस्यैरण्डजस्य च॥
प्रस्थं दत्ता समालोड्य सम्यङ्मृद्वग्निना पचेत्।
एतदीश्वरपुत्त्राणां प्राग्भोजनमनिन्दितम्॥
राज्ञां राजसमानाञ्च बहुस्त्रीपतयश्च ये।
मूत्रकृच्छ्रे कटिस्तम्भे तथा गाढपुरीषिणाम्॥
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते।
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये॥
बल्यं रसायनं प्रोक्तं सुकुमारकुमारकम्।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथापर:॥ १२॥

इति मूत्रकृच्छ्रचिकित्सा।

---

## अथ मूत्राघाताधिकारः।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत्।
बस्तिमुत्तरबस्तिञ्च दद्यात् स्निग्धं विरेचनम्॥

---

पञ्चमूलं एतदपि मिलिता दशपलमानं विदारिगन्धा शालपर्णी नामाङ्का नागबला, गोरक्षतण्डुला इत्यर्थः। अतिबला श्वेतबला। द्रोण इति द्रव्यतुलाद्वये प्रत्येकं द्रोण इत्यर्थः। द्विपलिका इति पलद्वयमाना इति। गुडमेरण्डतैलञ्च दत्त्वैव पाकः। देयोऽन्येषु तथा पर इति अन्येषु दशमूलादिष्वपरद्रोण इत्यर्थः। सुकुमारेति सुकुमारा: सुखिन: कुमारा: शिशव: तयोर्हितत्वात् सुकुमारकुमारकसंज्ञा॥ १२॥

इति मूत्रकृच्छ्राधिकारः।

---

कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥ १ ॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥
पिबेद्‌गुड़ोपदंशान् वा लिह्यादेतान् पृथक् पृथक् ॥ २ ॥
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत् ।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम् ॥ ३ ॥

---

मूत्रगतविकारस्याधस्तादनन्तरं मूत्राघातारम्भः ।— मूत्रस्याघातोऽविबन्धः । मूत्राघातमूत्रकृच्छ्रयोस्त्वयं भेदः । मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विबन्धः, मूत्राघाते विबन्धो महान् कृच्छ्रत्वमल्पमिति ॥ कल्कमित्यादि ।— सुश्रुतस्य । एर्वारुर्दीर्घकर्कटीतुल्यः । धान्याम्लं काञ्जिकम् ॥ १ ॥

पाटल्या इत्यादि ।— सुश्रुतस्य । तिलादपीति तिलनालात् । इहापि यावशूकं पृथक् प्रयोगित्वं सम्बन्धनीयं तेन पृथक् पाटल्यादीनां क्षारस्रावोदकेन समां मदिरां त्वगेलोषणं प्रक्षिप्य पिबेत् । ऊषणं मरिचं अन्ये तु पाटलीयावशूकयोर्मिलित्वा क्षारः केवलयवक्षारस्याहृत्वात् अतएव वाभटे— यावशूकक्षारे च पाटलीयावशूकाभ्यां मिलित्वा पच्यते इत्याहुः । चक्रपाणिदत्तोऽप्येवं व्याख्यातवान् । कार्त्तिकस्तु मदिरामित्यस्य स्थाने मतिमानिति पाठं लोलत्वचूर्णितमिति चाध्याहृत्य व्याचष्टे । पाटल्यादीनां चूर्णं क्षारोदकेन मुष्ककक्षारादिगणा पिबेदिति विश्वामित्रवचनात् । इल्लनस्तु मतिमानित्यत्र मदिरामिति पाठं तथा गुड़ेन मिश्रान् गुड़ोपदंशानिति पाठं चानार्षमाह ॥ २ ॥

त्रिफलेत्यादि ।— सुश्रुतस्य । अत्रापि पानं क्षारोदकेनेत्यनुवर्त्तयति कार्त्तिकः । अन्ये तु अभयामलकाक्षाणां कल्कं बदरसम्मितम् । अम्भसा लवणोपेतं पिबेन्मूत्ररुजापहमिति वचनं मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम् । अतस्तद्द्वयं नादत्वाच्छैवमानं तथा मिलित्वाष्टमाषकं मानश्चेत्याहुः त्रिफलाकल्कमाषा ६ सैन्धवमाषा २ । निः

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
दृतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्॥ ४॥
सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः॥ ५॥
दाडिमाम्बुयुतं मुख्यमेलाबीजं सनागरम्।
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते॥ ६॥
पिबेच्छिलाजतुक्वाथे गणे वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा।

---

औषधयोगे तालवस्त्रतमिति वस्त्रगालितं मधुयोगादयं योगः पेयः। यदाह वाभटः—स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितमिति॥३॥

जल इत्यादि।—सुश्रुतस्य। अत्र कुङ्कुमं कल्कं शीतकषायविधिना जले पर्य्युषितं प्रातस्त्वं त्रस्रुतं सक्षौद्रं पिबेत्। पिबन् कुङ्कुमकर्षं वा मधूदकसमायुतम्। रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयादिति पाठान्तरम्। सुश्रुतटीकाकृतः पठन्ति व्याख्यानयन्ति च। कुङ्कुमकर्षं मधूदकाभ्यामालोड्य रात्रौ स्थापयित्वा ततः पानमिति। स तैलमित्यादि द्वितीयो योगः सुश्रुतस्य वा गन्धः पर्य्ययोगापेक्षया। क्षारवद्वा परिस्रुतमिति सुश्रुतेऽपि मदात्ययप्रतिषेधे—पलाशक्षारमाहृत्य षड्गुणतः परिस्रुतमिति। स्नेहं तेन दत्त्वा यथामात्रां खादेद्दग्धभुक्तिः इति॥४॥

सुरामित्यादि।—सुश्रुतस्य। पिबेन्नर इत्यन्त एक एवायं योगः। वाभटेऽपि सौवर्चलाभ्यां मदिरां पिबेन्मूत्रकृच्छ्रापहामित्येवोक्तम्॥५॥

दाडिमेत्यादि।—नागरान्तो द्वितीयो योगः। दाडिमाम्बुयुतमिति दाडिमरसयुतम्। रसाभावे तु क्वाथः। मुख्यमित्येलाबीजविशेषणम्। पीत्वा सुरां सलवणामिति सर्वेष्वयम्। वस्तुतस्तु दाडिमाम्बुयुतां मुख्यामेलाबीजकनागरैरित्यनेन सम्बध्यते मुख्यां सुरामिति पैत्रिकीम्॥६॥

पिबेदित्यादौ।—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिबेदित्यर्थः। एतद्व्याधौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभा क्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति। त्रिकण्टकेत्यादि योगत्रयम्। सुश्रु

त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ७॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥
गोधावत्यामूलं क्वथितं घृततैलगोरसैर्मिश्रम्।
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् ॥ ८ ॥
जलेन खदिरीबीजं मूत्राघाताश्मरीहरम्।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत् ॥
मूत्रे विबद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत् ॥ ९ ॥
शृतशीतपयोन्नाशी चन्दनं तण्डुलाम्बुना।
पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥
शीतोऽवगाहः आवस्तिमुष्णवातनिवारणः।
कुष्माण्डकरसश्चापि पीतः सक्षारशर्करः ॥ १० ॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥ ११ ॥

---

प्रगाढ़मिति पूर्व्वेण योगद्वयेन सम्बध्यते। त्रिकण्टकादिसिद्धं वा तृणपञ्च-मूलसिद्धं पयो गुड़प्रगाढ़ं हितम्। सघृतं पय इति तृतीयो योगः ॥ ७ ॥

नलेत्यादौ।—शिफा मूलं तच्च नलादिभिः प्रत्येकं सम्बध्यते। कचः वृहस्पतेः पुत्त्रः। गोधापदी गोहालिया इति ख्याता। गोरसो-ऽत्र तक्रम् ॥ ८ ॥

जलेनेत्यादौ।—खदिरीबीजमशोकबीजमित्याहुः। मूत्र इ-त्यादौ। लिङ्ग इति लिङ्गरन्ध्रे श्लक्ष्णदूर्व्वाकाण्डादिना च कर्पूररजः प्रक्षेपः। एवं स्त्रीयोनावपि। लिङ्गवचनस्य सामान्यवचनत्वात् ॥ ९ ॥

शृतेत्यादौ।—श्रेष्ठं चन्दनमिति योज्यं तेन श्वेतचन्दनमित्यर्थः। शृतशीतपयसान्नभोजनशीलः। आवस्तीति वस्तिभागपर्य्यन्तम्। कुष्मा-ण्डरसः कुष्माण्डमज्जिकारसः ॥ १० ॥

मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तस्य रक्तस्यापि विधानमुपदिश-

खर्जूराफलमृद्वीकाकणाचुरहिताशनः।
समांशमर्द्धभागानि चीरचौद्रघृतानि च।
सर्व्वं सम्यग्-विमथ्याचमानं लीढ़्वा पयः पिवेत्।
हन्ति शुक्राशयोत्थांश्च दोषान् बन्ध्यासुतप्रदम्॥ १२॥

चित्रकाद्यं घृतम्।

चित्रकं शारिवा चैव बला कालानुशारिवा।
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत्॥
तथैव मधुकं दद्याद्दद्यादामलकानि च।
घृताढ़कं पचेदेभिः कल्कैरचसमन्वितैः॥
चीरद्रोणे जलद्रोणे तत् सिद्धमवतारयेत्।
शीतं परिस्रुतञ्चैव शर्करा प्रस्थसंयुतम्॥
तुगाचीर्य्याश्च तत्सर्व्वं मतिमान् प्रतिमिश्रयेत्।
ततोमितं पिवेत् काले यथादोषं यथाबलम्॥

---

भाष्य स्त्रीणामित्यादि।—सुश्रुतस्य। सुश्रुतेऽमुं पन्थं कार्त्तिककुण्डोन पठति। शुक्रवर्णनत्वेनोक्तत्वात्। जेज्जडस्तु प्रकरणान्तरतात् शिष्यहितैषितया पठति॥ ११॥

खर्जूरेत्यादौ।—खर्जूराफलं शृङ्गाटकबीजं मृद्वीका द्राक्षा। कणा पिप्पली न तु कणा चुरकः। सुश्रुते पिप्पलीपाठात्। चुरकः कोकिलाक्षस्तस्य बीजम्। सिता शर्करा रजश्चूर्णम्। अर्द्धभागानि चीरचौद्रघृतानि चेति समुदितं चूर्णात् चीरादीनि प्रत्येकमर्द्धभागानि। सुश्रुते पुनरयं योगोऽन्यथा पठ्यते। चौद्रार्द्धभागः कर्त्तव्योभागः स्यात् चीरसर्पिषोः। शर्करायाश्च चूर्णानि द्राक्षाचूर्णञ्च तत्समम्। चयं गुप्तफलञ्चैव तथैवेचुरकस्य च। पिप्पलीनान्तथा चूर्णमर्द्धभागं प्रदापयेदिति॥ १२॥

चित्रमित्यादि।—सुश्रुतस्य। कालानुशारिवा तगरपादिका। विशाला गोरक्षकर्कटी। चित्रफला गोरचकर्कटीभेदः। तुगाचीरी

वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत् ।
रक्तरेताग्रन्थिरेताः पिबेदिच्छन्नरोगताम् ॥
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम् ॥
प्रजाहितञ्च धन्यञ्च सर्व्वरोगापहं शिवम् ।
सर्पिरेतत्प्रयुञ्जानां स्त्री गर्भं लभतेऽचिरात् ॥
असृग्दोषान् जयेच्चैव योनिदोषांश्च संहतान् ।
मूत्रदोषेषु सर्व्वेषु कुर्य्यादेतच्चिकित्सितम् ॥ १२ ॥

इति मूत्राघातचिकित्सा ।

## अथाश्मर्य्यधिकारः ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ।
वीरतरः सहचरौ दर्भो वृक्षादनी नलः ॥
गुन्द्रा काशकुशावश्मभेदमोरटटुण्टुकाः ।
कुरुण्टिका च वशिरो वसुकः साग्निमन्थकः ॥
इन्दीवरी श्वदंष्ट्रा च तथा कापोतवङ्ककः ।

इत्यत्र प्रस्थसंयुतमित्येतत् सर्वत्रापि मध्याकृष्य सम्बन्धनीयम् । काके-जीत्यादिलक्षणे । यथादोषं यथावलमिति मिलितदोषाणि यथायुक्तम् ॥ १२ ॥

मूत्राघाताधिकारः ।

कृमिविरोधित्वसामान्यादश्मरीचिकित्सितमुच्यते वरुणस्येत्यादि अश्मरीति कोटाद्यनुपहतीम् । यवक्षारगुडौ प्रक्षेप्यौ । वीरतर इत्यादि ।— वीरतरः शरः सहचरौ झिण्टीद्वयं पीतनीलपुष्पभेदात् । दर्भः कुशा तृणं वृक्षादनी वन्दाकः । गुन्द्रा एरकः, मोरटमिक्षु-

ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ।
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् वातनाशने ॥ १ ॥

ऊषकादिः ।

ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलुः ।
शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः ॥
ऊषकादिः कफं हन्ति गणो मेदोविशोधनः ।
अश्मरीशर्करामूत्रकृच्छ्रघ्नः कफगुल्मनुत् ॥ २ ॥

कुशाद्यं घृतम् ।

कुशः काशः शरो गुल्म इत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरण्टिका ।
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम् ॥

---

दानं प्राधान्यख्यापनार्थम् । वर्गेऽस्मिन् वातनाशन इति पाषाणभेदादिवीरतान्तक्वाथ्यस्य द्रव्यवर्गे, ऊषकादिकन्तु प्रतीवापद्रव्यं कफहरमिति शक्तिविशेषसाधनार्थं संयोज्यमानं क्षारादिष्वेव प्रक्षेपविषयतां देयमित्याहुः । अयमर्थो वृन्देनाप्युक्तो यथा।— कुर्य्यात् क्षारादिकं क्वाथे अस्मिन् चूर्णमथापकैरिति । चूर्णमिति प्रक्षेपं कल्कापकैरिति कल्कद्रव्यैरल्पैः, छन्दोभङ्गानुरोधाद् ह्रस्वत्वम् । एवं वर्गेऽस्मिन् पित्तनाशन इत्यादावपि व्याख्येयम् ॥ २ ॥

ऊषकादिवर्गमाह ऊषकमित्यादि— सुश्रुतस्य । ऊषकं क्षारमृत्तिका । काशीशद्वयमिति धातुकाशीशं पुष्पकाशीशञ्च तत्राद्यं मलवर्णं किञ्चिदम्लं लवणरसं द्वितीयस्त्वीषत्पीतं कषायरसम् ॥ २ ॥

कुश इत्यादौ ।— मोरट इक्षुमूलं गुल्मः गुल्मशरः, वाराही वाराहीकन्दस्तदभावे चर्म्मकारालुकम् । भल्लूकः श्योनाकः, पत्तूरः शालिञ्चा, पुनर्नवे पुनर्नवाद्वयम् । एषां सर्व्वेषां क्वाथः शिलाह्वादीनां कल्क

घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च।
त्रपुषैर्व्वारुकाणां वा बीजैश्चावापितं शृतम्॥
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च॥
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् पित्तनाशने॥४॥

वरुणादिगणः वरुणादि शृतम्।

गण वरुणकादौ च गुग्गुल्वेलाहरेणुभिः।
कुष्ठभद्रामरिचचित्रकैः ससुराह्वयैः॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्व्वीत वर्गेऽस्मिन् कफनाशने॥
वरुणार्त्तगलः शिग्रुतर्कारीमधुशिग्रुकाः।
मेषशृङ्गीकरञ्जौ च बिम्ब्यग्निकृत्स्नमोरटाः॥
शैरेयौ वशिरो दर्भौ बरीवसुकचित्रकौ।

---

शिलाह्वमधुकबीजैरित्यत्र बीजपदं समासप्रविष्टमपि इन्दीवरस्येत्यनेन सह सम्बन्धनीयं न तु बीजोबीजकः पीतशालः वाभट सम्वादात्। तथा पिष्टेन त्रपुषादीनां बीजेनेन्दीवरस्य च। मधुकेन शिलाजेन तत्-पित्ताश्मरीनाशनम्। इन्दीवरञ्च कुवलयः एतेन मधुकः कृतद्वन्द्वत्वा-द्बीजोबीजक उच्यते इत्यपि द्वन्द्ववचनमबोधविन्यस्तमेव। अस्यार्थः कुसुममधुकशब्देन यष्टिमधुकमेवोच्यते न तु मधूकतरुस्तस्य बीजमव्यव-हारात् बीजोबीजक इति। आवापितं कल्कितम्॥४॥ —

गण इत्यादि — सुश्रुतस्य। अत्र "वरुणादिगणेन" क्वाथः शेषैश्च कल्कः ऊषकादिगणेन च कल्करूपेण सिद्धमित्यर्थः। अजासर्पिरित्यत्र वाभटे तु घृतमेवोक्तम्। आर्त्तगलो हीमवइति भानुमतिः। तर्कारी

बिल्वं चैवाजशृङ्गी च बृहतीद्वयमेव च॥
वरुणादिगणो ह्येष कफमेदोनिवारणः।
विनिहन्ति शिरःशूलं गुल्माद्यन्तरविद्रधीन्॥ ५॥
वरुणत्वक्कषायस्तु पीतस्तु गुडसंयुतः।
अश्मरीं पातयत्याशु वस्तिशूलनिवारणः॥
यवक्षारं गुडोन्मिश्रं पिबेत् पुष्पफलोद्भवम्।
रसं मूत्रनिबन्धघ्नः शर्कराश्मरीनाशनम्॥
पिबेद्वरुणमूलत्वक् क्वाथं तत्कल्कसंयुतम्।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरीपातनः॥
नागरवरुणगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः।
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम्।
वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः॥
कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि।
श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम्॥
एतत् क्वाथवरं प्रातः पिबेदश्मरिभेदनम्।
मूलं श्वदंष्ट्रेक्षुरकोरुबूकात् क्षीरेण पिष्टं बृहतीद्वयाच्च॥
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरिभेदनार्थम्॥६॥

---

जयन्ती तन्नामम्, मधुशिग्रु, रक्ताङ्गोभाञ्जनं करञ्जौ करञ्जलाटाकरञ्जौ मोरटा इक्षुमूलं, अग्नीमन्थमिति भानुमतिः, चित्रकपर्णपत्राय इत्यन्ये। शैर्य्यौ पीतनीलपुष्पझिण्टीद्वयं दर्भः कुशः वरी शतावरी, बस्तकोञ्चसुहृत् इति ख्यातः, अजशृङ्गी आवर्त्तनिका॥ ५॥

पुष्पफलोद्भवं रसमिति पुराणकुष्माण्डरसम्। पिबेदित्यादि — पिबेदश्मरीभेदनमित्यन्तं स्पष्टम्। मूलमित्यादि बृहतीद्वयान्तयोगः। इक्षुरकः कोकिलाक्षः सर्व्वं मिलित्वा माषकचतुष्टयं दुग्धे न पिष्ट्वा अनन्तदध्ना पेयम्॥ ६॥

पक्वेक्ष्वाकुरसः क्षारः सितायुक्तोऽश्मरीहरः ।
पाषाणरोगपीड़ां सौवर्च्चलयुक्ता सुरा जयति ॥
तद्वन्मधुदुग्धयुक्ता चिराद् तिलनालभूतिश्च ॥ ७ ॥

एलादिः ।

एलोपकुल्या-मधुकाश्मभेद-कौन्तीश्वदंष्ट्रावृषकोरुबूकैः ।
क्वाथं पिवेदश्मजतुप्रगाढ़ं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥ ८ ॥
त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम् ।
अवीक्षीरेण सप्ताहं पिवेदश्मरिनाशनम् ॥
शुक्राश्मर्य्यान्तु सामान्योविधिरश्मरिनाशनः ॥ ९ ॥

पाषाणभेदाद्यं चूर्णं घृतञ्च ।

पाषाणभेदं वृषकं श्वदंष्ट्रा पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराश्वासितिमारकाणामेर्व्वारुकाञ्च त्रपुषाञ्च वीजम् ॥
उपकुञ्चिका हिङ्गु सवेतसाम्लं स्याद्द्वे वृहत्यौ हपुषा वचा च ।
चूर्णं पिवेदश्मरिभेदिपक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥१०॥

कुलत्थाद्यं घृतम् ।

कुलत्थसिन्धूत्थविड़ङ्गसारं सशर्करं शीतलियावशूकम् ।

---

पक्वेत्यादौ इक्ष्वाकुस्तिक्तालाबुस्तस्य मज्जिकाखरसः पाषाणरोगोऽश्मरी, तिलनालभूतिस्तिलनालक्षारः ॥ ७ ॥

एलेत्यादौ — उपकुल्या पिप्पली, अत्र शोधितशिलाजतुनो माषकत्रयं चतुष्टयं वा प्रक्षेप्यमित्याहुः ॥ ८ ॥

शुक्राश्मर्य्यान्तु सामान्योविधिरिति अश्मरीमात्रसाधारणविधिः ॥ ९ ॥

पाषाणभेदमित्यादौ । निकुम्भा दन्ती, खराश्वा अजमोदा, शितिमारः शालिञ्चः, उपकुञ्चिका कृष्णजीरकम् । चूर्णं पिवेदिति विशेषानभिधानाज्जलेनैव । तैः पाषाणभेदादिभिरेव कल्कैः पक्वं सर्पिश्च पेयमित्यन्वयः ॥ १० ॥

बीजानि कुष्माण्डकगोक्षुराभ्यां घृतं पचेत्ना वरुणस्य तोये।
दुःसाध्यसर्व्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्।
एतानि सर्व्वाणि निहन्ति शीघ्रं प्ररूढ़वृक्षानिव वज्रपातः॥११॥

शरादि पञ्चमूल्यादिघृतम्।

शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम्।
अस्य गोक्षुरकल्केन सिद्धमद्यात् सशर्करम्॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम्॥१२॥

वरुणाद्यं घृतम्।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत्॥
वरुणं कदलीविल्वं तृणजं पञ्चमूलकम्।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम्॥
शतपर्व्वतिलक्षारं पलाशक्षारमेव च।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत्।
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया।
जीर्णे तस्मिन् पिबेत् पूर्व्वं गुड़ं जीर्णन्तु मस्तुना।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत्॥१३॥

---

कुलत्थघृते शीतलो शिलावल्कोपरः, अन्ये तु शीतली चावमूलं शिर्वति यवक्षारः स तु स्फाटिकसैन्धवर्णकाश इत्यर्थः व्यवस्थातस्तु पूर्व्ववैव। शर्करा तु कल्करूपा॥११॥

शरादिपञ्चमूलमित्यत्र।—शरादीति विशेषणात् चरकोक्तं तृण-पञ्चमूलं ग्राह्यं यथा—शरेक्षुदर्भकाशानां शालीनां मूलमेव च। अत्र शर्करा प्रक्षेप्या चतुर्थांशः पूर्व्वयोगापेक्षया॥१२॥

वरुणादिघृते।—कदल्याः फलमामं गृहीत्वा, अश्मजं शिलाजतु त्रपुषं मात्रात्फलम्. शतपर्व्वातिक्षारस्य नैको मत वा। यथासिद्धे घृते, पूर्व्वमिति भोजनात् पूर्व्वम्॥१३॥

वीरतराद्यं तैलम्।

अश्माधिकारे यत्तैलं सैन्धवाद्यं प्रकीर्त्तितम्।
तत्तैलं द्विगुणक्षीरं पचेद्वीरतरादिना॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः।
एतत्तैलवरं श्रेष्ठमश्मरीणां विनाशनम्॥
मूत्राघाते मूत्रकृच्छ्रे पिच्छिते मथिते तथा॥
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते॥ १४॥

वरुणाद्यं तैलम्।

त्वक्पत्रमूलपुष्पस्य वरुणात् सविकण्टकात्।
कषायेण पचेत्तैलं वस्तिनास्थापनेन च॥
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रनिवारणम्॥ १५॥
शल्यवित्तामशाम्यन्तीं प्रत्याख्याय समुद्धरेत्।
पायु स्निग्धाङ्गुलीभ्यान्तु गुदमेढ्रान्तरेन ताम्॥
सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्यतु।

---

अश्माधिकार इत्यादि।— तत्तैलमिति अश्माधिकारोक्तविधिना सिद्धं तत्तं पुनरपि द्विगुणं क्षीरं दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा, पूर्व्वकल्केनेति सैन्धवाद्यकल्केन पचेत्। अन्ये तु केवलं तैलमेव वीरादिना पचेदिति पठन्ति तत्तु न व्यवहारसिद्धम्। यद्यपि सैन्धवाद्ये तिलतैलमेरण्डतैलञ्चोक्तं तथापि अत्र वरुणाद्यौ तिलतैलस्यैव स्नेहस्रोतोनुसारित्वेन यौगिकत्वादुपग्रहणमित्याहुः। पिच्छित इत्यागन्तुकाश्मरीविशेषे, मथित इति चूर्णिते॥ १४॥

त्वक्पत्रेत्यादि।—क्वाथार्थं वरुणकस्य यथालाभं त्वक्पत्रमूलपुष्पं पल १२ गोक्षुर पल १२ जल ६४ शेष १६ अकल्कमिदं तैलम्॥ १५॥

सव्यपार्श्वे इति।— वामपार्श्वे निःशेषमश्मरीं कुर्य्यादिति सुश्रुतश्लोकार्थात्। यतो दक्षिणं निर्हरेदिति वक्ष्यमाणश्लोकार्थः।

अयं सत्यश्मरीभावं कर्मैतां शल्यकर्मवित्।
भिन्नेतु वस्तौ त्वज्ञानान्मृत्युः स्यादश्मरीं विना।
निःशेषामश्मरीं कुर्याद्दस्तौ रक्तञ्च निर्हरेत्॥
हृता अश्मरीं कटु मधु गाहयेद्भोजयेच्च तम्।
गुड मूत्रविशुद्ध्यर्थं मध्वाज्याक्तव्रणं ततः॥
दद्यात् यवाग्वां त्र्यहं पेयां साधितां मूत्रशोधिभिः।
आदशाहं ततो दद्यात् पयसा मृदुमोदनम्॥
स्वेदयेद्द्रवमध्वाढ्य कषायैः क्षालयेद्व्रणम्।
प्रपौण्डरीकमञ्जिष्ठायष्टिलोध्रैश्च लेपयेत्॥
एतैश्च सलिलैः सिद्धं घृतमभ्यञ्जने हितम्।
अशान्ते तु सप्ताहाद्व्रणे दाहोऽपि चेष्यते॥
दैवात्काण्डे तु या लग्ना तां विपाट्यापकर्षयेत्॥ ९६॥
इत्यश्मरीशर्कराचिकित्सा।

---

तयाश्मरि ... प्रपूर्यंत इति भावः। हृताश्मरीमित्यादौ गुडं भोजयेदित्यन्वयः। मूत्रशोधिभिरिति तृणपञ्चमूलादिभिः। तत इति त्र्यहादूर्ध्वं आदशाहं दशाहपर्यन्तम्। पयसा दुग्धेन मृदुभोजनं को-मलभक्तं ... तथा स्वेदयेच्च दशाहाभ्यन्तर एव स्वेदोयुक्तः। दश-रात्रं ... प्रमत्तं स्वेदयेदिति। स च स्नेहद्रवस्वेदः रक्तपित्तानुबन्ध-त्वाद्व्रणयोरिति गयदासः। द्रवमध्वाढ्यमिति मृदुमोदनमित्यस्य विशे-षणं द्रवकृतमध्वप्रधानं मधुप्रधानञ्चेत्यर्थः। कषायैः क्षालयेद्व्रणमिति दशाहादूर्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं बोध्यं भोजसम्वादात्। सलि-लैरिति घृतसाधनद्रव्यं लभ्यते न तु लेप इति सुश्रुतसम्वादात्॥ ९६॥
इति अश्मरीरोगचिकित्सा।

# अथ प्रमेहाधिकारः।

श्यामाककोद्रवोद्दालगोधूमचणकाढ़की ।
कुलत्थाश्च हिता भोज्ये पुराणामेहिनां सदा॥
आकुलं तिक्तशाकानि यवान्नञ्च अमोमधु ।
पारिजातजयारिमन्थवह्निगायन्त्रीणां पृथक्॥
पाठायाः सागुरोः पीताद्वयस्य शारदस्य च।
अलेचुमद्यसिकतायुनेर्ल वणाचिष्टकान्॥
सान्द्रमेहान् क्रमाद्घ्नन्ति क्वाथाश्चाष्टौ समाक्षिकाः॥१॥
दूर्व्वाकशेरुपूतीककुम्भीकन्दवशैवलम्।
जलेन क्वथितं पीतं शुक्रमेहहरं परम्॥
त्रिफलारग्वधद्राचाकषायोमधुसंयुतः।
पीतो निहन्ति फेणाग्रं प्रमेहं नियतं नृणाम्॥
लोध्राभयाकट्फलमुस्तकानां विडङ्गपाठार्ज्जुनधन्वनानाम्।

---

अश्मर्य्यनन्तरं वस्तिविकृतिसामान्यात् प्रमेहप्रतिकार उच्यते। श्यामाकेत्यादि।—उद्दालोवनकोद्रवः, आढ़की तुवरी, यवान्नमिति यवशक्त्वादिकम्। पारिजातेत्यादि। पारिजातः पारिभद्रकः, जया जयन्ती, वह्निश्चित्रकः, गायन्त्री खदिरः। पाठायाः सागुरोरित्येकः क्वाथः। पीता द्वयं हरिद्राद्वयम्। अयमप्येकः। शारदः सप्तपर्णः। पारिभद्रेत्यादयोऽष्टौ क्वाथाः जलाद्यष्टौ मेहान् क्रमाद्घ्नन्तीत्यन्वयः॥१॥

दूर्व्वेत्यादौ।—पूतिकः करञ्जस्य त्वक्। कुम्भीकः पाक्लाः, शैवः शैवसंयुतम्। शीते मधु क्षिपन्ति वृद्धाः सुश्रुतसम्वादात्। त्रिफलेत्यादि स्पष्टम्। लोध्रेत्यादि।— योगद्वयं वाभटस्य। कदम्बेत्यादि योगद्वयं चरकस्य चक्रेण प्रतिसंस्कृत्य लिखितम्। धन्वनोधातकी, दीप्यकोऽजमानी, प्रसवः खदिरः, चक्रमर्द इति खदिरस्य संज्ञा

मञ्जिष्ठपाठाद्युदकचन्दनैश्च सर्व्वैः समस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद्धृतन्तु पित्तेषु मिश्रं त्रिषु सन्निजेषु॥८॥

धान्वन्तरं घृतम्।

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम्।
पित्तमेहघ्ननिर्यूहसिद्धं पित्ते हितं घृतम्॥
दशमूलं करञ्जौ द्वौ देवदारुहरीतकी।
वर्षाभूर्वत्सकोदन्ती चित्रकं सपुनर्नवम्॥
सुधा नीपकदम्बाश्च विल्वभल्लातकानि च।
शटी पुष्करमूलञ्च पिप्पलीमूलमेव च॥
पृथग्दशपलान् भागान् ततस्तोयार्म्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
त्रिवृतं त्रिफला भार्गी रोहिषं गजपिप्पली॥
मङ्केरं विडङ्गानि वचाकम्पिल्लकन्तथा।
गर्भेणानेन तत् सिद्धं पाययेत्तु यथाबलम्॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठं गुल्मं प्रमेहांश्च श्वयथुं वातशोणितम्॥

---

टिप्पणी:। त्रिदोषत्वञ्च कफपित्तप्रमेहेष्वेवानुबन्धानुबन्धकृतं मन्तव्यं किम्वा सर्व्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतदोषाविर्भावः कदाचिद्भवतीति ज्ञेयम्॥८॥

कफमेहेत्यादौ क्वाथनिर्यूहेति पदोपादानादकल्कत्वं बोध्यम्। दशमूलेत्यादौ।— करञ्जयोः फलं नतु मूलम्, मेहघ्नत्वं फलस्यैवेति यदुक्तं — करञ्जविंशुकारिष्टफलं जन्तुप्रमेहनुदिति। सुधा स्नुही तस्या मूलम्, नीपकदम्बौ स्वल्पबृहत्कदम्बौ किम्वा कदम्बोभूकदम्बश्च चांशम्बः, तन्मात्रे भूकदम्बपाठात्, नीपस्थाने क्वापि कदम्बः

गोमोदरं तथार्शांसि विद्रधिं पीड़काश्च याः ॥
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ।
पृथक् तोयार्म्मणे तत्र पचेद्दशगुणाञ्च्छृतं घृतम् ॥
घृतत्रयाधिके तोयमुत्सर्गक्रमतोभवेत् ॥ ८ ॥

त्र्यूषणादिगुड़िका ।

त्रिकटुत्रिफलाचूर्णं तुल्ययुक्तन्तु गुग्गुलुम् ।
गोक्षुरक्वाथसंयुक्तां गुडिकां कारयेद्भिषक् ॥
दोषकालबलापेक्षी भक्षयेच्चानुलोमिकीम् ।
न चात्र परिहारोऽस्ति कर्म्म कुर्य्याद्यथेप्सितम् ॥
प्रमेहान् मूत्रघातांश्च बालरोगोदरं जयेत् ॥ १० ॥

शिलाजतु प्रयोगः ।

शालसारादितोयेन भावितं यच्छिलाजतु ।

---

पठ्यते । पृथग् दशपलानाम् भागानिति दशमूलं प्रत्येकं दशपलम्, अत्र प्रतिशतं तोयार्म्मणदानं शतत्रयाधिके द्रव्ये पुनरुत्सर्गसिद्ध-मष्टगुणमेव जलं देयं अतएव वक्ष्यति, पृथक तोयार्म्मण इत्यादि, अर्म्मणो द्रोणः, चन्द्रस्त्वाह पाठान्तरमतं तोयं क्वाथ्याद्दशगुणमित्येति । अस्यार्थः एतदेव घृतं तन्त्रान्तरेऽन्यथा पठ्यते तत्र क्वाथार्थ-मष्टगुणन्तोयमुक्तम्, तत् प्रामाण्यादिहाप्यष्टगुणं तोयं देयम् । अत-एवारक्षधुना चक्रमतेनैव । निचुलः इज्जलः, रोहिषं गन्धतृणम् ॥ ८ ॥

त्रिकटुरित्यादि ।— त्रिकटु त्रिफलाचूर्णं कीदृशं तुल्ययुगगुलु-युतम्, पुनः कीदृशं गोक्षुरक्वाथेन सम्यग् युक्तं भावितं एवं कृत्वा गुड़िकां कारयेदित्यर्थः । मिलितत्रिफलाचूर्णं पल १ मिलितत्रिकटुचूर्णं पल १ गुग्गुलु पल २ चूर्णयुक्तगुग्गुलुभावनार्थं गोक्षुरः पल ४ क्वाथार्थं पाजल ॥ एवं यथाक्रमातो भावयेत् तदनु षष्टमाषक-मितावटिकाः कार्य्याः ॥ १० ॥

पिबेत्तेनैव संशुद्धदेहः पिष्टं यथाबलम् ॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम् ।
कुर्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥
मधुमेहं विहायासौ शर्करामश्मरीन्तथा ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ ११ ॥
माक्षिकं धातुमप्येवं युञ्ज्यात्तस्याप्ययं गुणः ।
शालसारादिवर्गस्य क्वाथे तु घनतां गते ॥
दन्ती लोध्रं शिवाकान्तलौहताम्ररजः क्षिपेत् ।
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति ॥
व्यायामजातमखिलं भजन्मेहान् व्यपोहति ।
पादत्रच्छत्ररहितो भिक्षाशी मुनिवद्यतः ॥
योजनानां शतं गच्छेदधिकं वा निरन्तरम् ।
मेहान् जेतुं वने वापि नीवारामलकाशनः ॥ १२ ॥
शराविकाद्याः पीडकाः साधयेच्छोथवद्भिषक् ।
पक्वाश्चिकित्सेद्व्रणवत्तासां पाने प्रशस्यते ॥

---

शालसारादितोयेनेत्यादि वक्ष्यमाणरसायनविधिना ज्ञेयम् । तेनैवेति शालसारादितोयेनैव पिबेत् । संशुद्धदेह इति वमनादिना । पिष्टमिति चूर्णितम्, तुलां यावदुपयुञ्जीत इति प्रतिदिनमर्द्धकर्षादिमात्रया । शालसारादिवर्गस्य चतुर्थभागावशिष्टे क्वाथे पुनः पाकाद्घनीभूते दन्त्यादीनां मिलितानां चूर्णं पादिकं प्रक्षेप्यं कुटजलेहवत् । शिवा हरीतकी, मारितपुटितकान्तलौहादिचूर्णं तस्य सर्वं शिलाजतु-[illegible]वत् । व्यायामजनितमिति मल्लयुद्धादिजनितम् । नीवारेत्यत्र च वर्गं तेन श्यामाकादिकमपि बोध्यं यदाह सुश्रुतः — महावने वा श्यामाक-नीवारामलक-कपित्थ-तिन्दुकाश्मन्तकफलमूलाहारो मृगैः सह वसेदिति ॥ ११—१२ ॥

प्रमेहपीडकाचिकित्सामाह शराविकाद्या इति ।— शोथवदिति ।

क्वाथं वनस्पतेर्व्वासं मूत्रञ्च न्यग्रोधनम्।
एलादिकेन कुर्व्वीत तैलञ्च व्रणरोपणम्॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च।
शालसारादिसेकञ्च भोज्या दश्च कणादिना॥
सौवीरक सुरां शुक्तं तैलं क्षीरं घृत गुड़म्।
खखेक्षुरसपिष्टान्नानपभःसानि वर्ज्जयेत्॥१२॥
इति प्रमेहमधुमेहपिड़काधिकारः।

---

## अथ स्थौल्याधिकारः।

व्योषाद्यशक्तु पयोगः।
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः॥
अस्वप्नञ्च व्यवायञ्च व्यायाम चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्।

---

न्यग्रोधवदिति वनस्पतिरिति वटादेः, वल्कलं क्वाथनम्। एला-दिकेनेत्यादि।— एलादिगणस्य सौश्रुतः कल्कक्वाथावनिर्द्दिष्टगणात्तथाव् भावयेदिति वचनात् एलादिगणस्य क्वाथः कल्कश्च। अन्ये त्वलादि-गणस्य कल्कोक्तं चतुर्गुणमित्याहुः। आरग्वधादिः सौश्रुतगणः। क्वाथमिति पानार्थं परिषेकार्थञ्च। भोज्यादिमित्यादि मन्थात् पानमपि सौध्यं कणादिनेति पिप्पल्यादिगणेन सौश्रुतेन। निदानपरिवर्ज्जनमाह सौवीरमित्यादि॥१२॥

इति प्रमेह प्रमेहपीड़का-चिकित्सा।

---

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दृष्टदोषत्वात् प्रमेहानन्तरं स्थौल्यचिकित्सामाह श्रमेत्यादि। मधुरं वारि रसि

प्रातर्म्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत्॥
सचव्यजीरकव्योषहिङ्गुसौवर्च्चलानलाः।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः॥
विड़ङ्गनागरक्षारकाललोहरजोमधु।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः।
व्योषं विड़ङ्गशिग्रूणि त्रिफलां कटुरोहिणीम्।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम्॥
हिङ्गुकेबुकमूलानि यमानीधान्यचित्रकम्।
सौवर्च्चलमजाजीञ्च हपुषाञ्चेति चूर्णयेत्॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्म्मानतः समाः।
शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत्॥
प्रयोगात्तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः।
प्रमेहामूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः॥
प्लीहापाण्डामयः शोथो मूत्रकृच्छ्रमरोचकः।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः।
क्रिमयो ग्रहणीदोषाः श्वैत्यं स्थौल्यमतीव च।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च जायते॥ १॥

---

मधुवारि अत्र सत्वारत्वेन कौपं जलमेव यौगिकमिति वृद्धाः। सच-व्येत्यादि।— अनलश्चित्रकः। शक्तव इह यवकृता व्योषादिशक्तु प्र-योगत्वाद्यात सर्व्वचूर्णात् षोड़शगुणाः। अनेन एकवारं भोजनमा-हारकृपत्वादित्याहुः। विड़ङ्गेत्यादौ।— क्षारो यवक्षारः काललौह-वज्रादि, अस्य चूर्णं मारणपुटननिष्पन्नत्वं प्राह्यं अत्र सव्यवर्णमेव समभागं प्राहुर्यान्ति किन्तु लौहस्य महावीर्यत्वेन प्राधान्यादिवरमि-श्रितवर्णं तत्त्वं मधुना चात्रावलेह इत्यप्याहुः। व्योषमित्यादौ तैल-घृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वं शक्तूनाञ्च षोड़शगुणो भागः सह-

अमृताद्योगुग्गुलुः।

बदरीपत्रकल्केन पेया काञ्जिकसाधिता।
स्थौल्यनुत् स्यात् साग्निमन्थरसं वापि शिलाजतु॥
अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पीडकास्थौल्यभगन्दरं जयेत्॥ २॥

नवकगुग्गुलुः।

व्योषाग्निस्त्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम्।
खादन् सर्व्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान्॥३॥

लौहरसायनम्।

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम्।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी॥
एषां दशपलान् भागांस्तोये पञ्चाढके पचेत्।
पादशेषं ततः कृत्वा कषायमवतारयेत्॥

---

टितचूर्णमेषया। सन्तर्पणमिति जलालोडितशक्तुस्वच्छतया तेन सन्तर्पणसंज्ञस्याप्यसन्तर्पणत्वं ज्ञेयम्। मात्रा चास्य आहारद्रव्यप्रधानत्वाद्भूयसी। [illegible] ॥ १ ॥

बदरीत्यादि।— बदरीपत्रं पक्वं पिष्ट्वा काञ्जिकद्रवेण पेया साध्या। साग्निमन्थेत्यादि— द्वितीयो योगः रसः क्वाथः शिलाजतु प्रक्षेप्यम्। अमृतेत्यादौ।— त्रुटिः सूक्ष्मैला, वेल्लो विडङ्गः, कलिङ्गो इन्द्रयवः केचिच्छन्दोभङ्गभयात् कालिपाठं कुर्व्वन्ति तन्मते कालिर्भल्लातकः किन्तु महेश्वरपत्रिकायामपि इन्द्रयव एव व्याख्यातः। तस्मादनन्तत्वाच्छन्दोभागानां नात्र छन्दोभङ्गदोष आशङ्कनीयः। क्रमवृद्धमिति अमृताया एको भागः द्वौ त्रुटेरित्यादि मधुना चालोड्य देयम्॥ २॥

व्योषेत्यादौ।—अग्निश्चित्रकः। गुग्गुलुरित्यादि सम पिण्ड

पलद्वादशकं देयं तीक्ष्णलौहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम्॥
पचेत्ताम्रमये पात्रे सुधीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम्॥
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम्।
मरिचं चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम्॥
पलद्वयन्तु काश्मीरं सूक्ष्मचूर्णीकृतं बुधैः।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत्॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम्
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम्।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम्॥
मूर्च्छामोहविषोन्मादगराणि विविधानि च।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम्॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम्।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम्॥
श्रीकरं पुत्रजननं वलीपलितनाशनम्।
नाश्नीयात् कदलीकन्दं काञ्जिकं करमर्द्दकम्॥
करीरं कारवेल्लञ्च षट्ककाराणि वर्ज्जयेत्॥४॥

---

तत्र शुगशुल्वोः शोधितस्य च काथकरणमय एव काथमध्ये प्रक्षेपः। अजम्बुषा चुञ्चिकरी। पुराणसर्पिहं प्रवर्षस्थितं यदुत्तमपूगन्धमित्यादि। शिलाजतु पलद्वयन्तु शोधितं भावितञ्च पाह्यम्। एलात्वचोर्मिलित्वा पलार्द्धं, मरिचादीनां प्रत्येकं पलद्वयम्, अञ्जनं रसाञ्जनं मधुनस्तु दिनान्तरे प्रक्षेपं मधुनः प्रस्थार्द्धं षोडशपलानि खण्डकौष्मदस्य पाकः षोडशान्तरदस्य मर्द्दनादिक्रिया बोध्या॥ १—४॥

## त्रिफलाद्यं तैलम्।

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम्॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम्।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान्॥ ५॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः॥
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः।
बिल्वपत्ररसैर्वापि गात्रदौर्गन्ध्यनाशनः॥
हरीतकीलोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानां जङ्घाकषायश्च नराधिपानाम्॥
गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन॥

---

त्रिफलातैले इन्द्रसुरा गोरक्षकर्कटी शिग्रुर्वरुणो वा।— सुरसादिरसप्लुतमिति सुश्रुतोक्तसुरसादिगणस्य क्वाथसंप्लुतः। ५॥

मेदोदोषजन्ययोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह शिरीषेत्यादि।— लामज्जकमुशीरं, हेमनागकेशरचूर्णम्, पत्रं तेजपत्रं तमालपत्रमित्यन्ये, अम्बु बालकम्, लौहमगुरुचन्दनं च रक्तचन्दनम्। शङ्खचूर्णेन संयुतमिति दग्धशङ्खचूर्णेन एवं बिल्वपत्ररसोऽपि।

हरीतक्यादौ।— अरिष्टपत्रं निम्बपत्रम्, दाडिमवल्कलं त्वक् फलस्य वा, अङ्गरागो वर्णप्रसादः। जङ्घाकषाय इति गजवाजिवाहनेन विमर्दनोत्थजङ्घयोर्वैवर्ण्यप्रसादनार्थं कषायविलेपनमित्यर्थः। यदुक्तं मेदिनीकरकोषे "कषायो रसभेदे च निर्यासे च विलेपने" इति।

गोमूत्रमित्यादि। योगान्तरं वर्णोज्ज्वलं हरिद्राद्वं वशकृ

त्रिफलापत्रकरसञ्चम्पितं कचादियोजितं जयति।
दग्धहरिद्रोद्वर्त्तनमपिचराद्दहदौर्गन्ध्यम्॥
दलमलमघमलयाभयाविलेपनं हरति देहदौर्गन्ध्यम्।
त्रिफलारग्वधलोध्रहितं पीतमिवाम्बुसारपूर्णम्॥६॥
इति स्थौल्यदौर्गन्ध्यचिकित्सा।

---

## अथोदराधिकारः।

उदरे दोषसम्पूर्णे कुक्षौ मन्दोऽपतोऽनलः।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान्।
पयोमूत्रासवारिष्टमधुसीधु तथा पिबेत्॥
वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत्।

---

इत्यन्ये। हरितालं गोमूत्रपिष्टं कुष्ठं हन्ति गोपयसा युक्तमिति पिष्टं तदेव दौर्गन्ध्यहरम्, तथा रजनीद्वयेन मर्दितं तदेव हरितालं पयोभिः क्षीरैः पीत्वा तिलकदानं वशीकरणं भवतीत्यर्थः।

त्रिफलेत्यादि।—त्रिफलापत्ररसेन सम्पतं कचयोजनमनरं पुटदग्धहरिद्रां पिष्ट्वा उद्वर्त्तनं कार्यमित्यर्थः। जलदलेत्यादि दलं तेजपत्रम्; जलं बालकं, अघगुरु, मलयजं चन्दनम्, अभयमुशीरम्, अभया हरितकी॥६॥
इति स्थौल्याधिकारः।

---

उदरोऽत्रैवबाधमग्नीव स्थौल्यानन्तरमुदरचिकित्साकाह उदर इत्यादि। उदरे उदररोगे। वातोदरमित्यादि मधु विरुक्तेव स्नेहपानमजीर्णोदरी ज्वरीति वचनात्, स्नेहपानं न भिन्नं तथा नोदरी नातिसाराद्येत्यादिना स्नेहोऽनिषिद्धः तत् कथमत्र स्नेहकं दो-

वातोदरे पयोऽभ्यासो निरूहो दशमूलिकः।
सोदावर्त्ते वातघ्नाम्लशृतैरण्डानुवासनः॥ २॥

सामुद्राद्यं चूर्णम्।

सामुद्रसौवर्च्चलसैन्धवानि क्षारं यवानामजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गुं विडङ्गञ्चेति समानि कुर्य्यात्॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्व्वं कवलं प्रशस्तम्।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम्॥
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः॥४॥
पित्तोदरे तु बलिनं पूर्व्वमेव विरेचयेत्।
अनुवास्याबलं क्षीरवस्तिशुद्धं विरेचयेत्॥

---

स सञ्चोयं तक्रं पिबेदित्यर्थः। दीप्यकं यमानी। निचयोदरी सन्निपातोदरी। गौरव इत्यादि चरकसूतस्य वैनवकस्यायं गुण इति। २॥

वातोदर इत्यादि।— पयोऽभ्यास इति क्रमेण यथार्थं बलमनागमकरं पयोनिवर्त्तनीयम्। निरूहो दशमूलिक इति दशमूलक्वाथेन निरूहः कार्य्य इत्यर्थः। अयञ्च तीक्ष्णविरेचनकृश्यनुक्तः कार्य्यः चरकप्रमाणात्। सोदावर्त्ते वातोदर इत्यन्वयः। वातघ्नाम्लशृतैरण्डानुवासन इति वातघ्नद्रव्यैः तथा अम्लैश्च काञ्जिकादिभिः शृतेनैरण्डतैलेनैरण्डतैलमनुवासनं यस्य कर्त्तुः स तथा इति, अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेनैरण्डतैलमुच्यते। २।

सामुद्रेत्यादि।— यवानां क्षारः यवक्षारः। अत्र हिङ्गु एकवद्भवोगः। चूर्णानीत्यत्र संमिश्राणीति शेषः। ४।

पित्तोदरेत्यादि।— क्षीरप्रधानो वस्तिः, क्षीरवस्तिः, बलं बलिनं पुरुषं पूर्व्वमिति अनुवासनमकृत्वैव विरेचयेत्। अबलं पुनरादावनुवास्य ततः क्षीरवस्तिशुद्धं विरेचयेत्। विरेकोऽप्यम्बिकयबलमनालम्ब्यैव कार्य्यः। उक्तं हि वाभटे— दुर्ब्बलं अनुवास्यादौ शोधयेत् क्षीरबस्तिभिः। याते चास्मिन् बलं स्निग्धं तथा भूयो विरेचयेदिति। केन विरेचयेदित्याह पयसेत्यादि। अतोऽदरूपबधस्य एवं प्राप्तं विरे-

पटोलाद्यं चूर्णम्।

पटोलमूलं रजनी विडङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत्॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततोमुष्टिं गवां मूत्रेण नापिबेत्॥
विरिक्तोजाङ्गलरसैर्भुञ्जीत मृदुमोदनम्।
मण्डं पेयाञ्च पीत्वा च सव्योषं षडहं पयः॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनः पुनः।
हन्ति सर्व्वोदराण्येतच्चूर्णं जातोदकान्यपि॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति॥ ६॥

नारायणं चूर्णम्।

यमानी हपुषा धान्यं त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥

---

च्यते स्नुगितग्रादौ।—यूषः पिष्टकम्, उदारमिति षडहं कल्कहष्टमिति चरकोक्तरसायनविधिदृष्टम्॥ ८॥

पटोलमूलमित्यादौ।—त्वच इति निरस्थित्रिफलाग्रहणार्थम्। षडाद्यान् कार्षिकानिति पटोलमूलादीनां षसां प्रत्येकं कर्षभागा इत्यर्थः। त्रींश्च द्वित्रिचतुर्गुणानिति कम्पिल्लादयस्त्रयः क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणा इत्यर्थः। नीलिनी निलवृक्षा तस्याश्च फलं इति वाभटस्वादात्। मुष्टिरिति पलं विरिक्तोजाङ्गलरसैरित्यादि।—विरेचनदिने जीर्णे भेषजे मृद्वोदनमण्डपेयानामन्यतममग्निबलापेक्षया उपयोज्यम्। ततः उर्द्धं षडहं यथोक्तं पयः, ततः सप्तमेऽहनि पुनः पटोलादिचूर्णः पेयः,एवं पुनः पुनः कार्य्यः॥ ६॥

यमानीत्यादौ।—उपकुञ्चिका कृष्णजीरकः, कारवी दूषनक्षणा

विड़ङ्गञ्च समांशानि दन्त्यांभागत्रयन्तथा।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा॥
एष नारायणो नाम चूर्णोरोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगाविष्णुमिवासुराः॥
तक्रेणोदरिभिः पेयोगुल्मिभिर्व्वदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसैः।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥१०॥
दन्ती वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिबेत् कल्कं जठरामयनाशनम्॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥
गवाक्षीशङ्खिनीदन्तीनीलिनीकल्कसंयुतम्।
सर्व्वोदरविनाशाय गोमूत्रं पातुमाचरेत्॥

---

क्षुद्रजीरकं जीरकशब्देन च प्रसिद्धं मङ्गल्जीरकं चजगन्धा[illegible]जमोटा स्वर्णक्षीरी कङ्कुष्ठः दन्त्याभागत्रयमाद्यभागापेक्षया एवं त्रिवृद्विशालयोरप्याद्यभागापेक्षया प्रत्येकं द्वैगुण्यं सातला चर्म्मकषा। नारायणसंज्ञानिमित्तमाह नैनमित्यादि एतेन नारायणबाधकत्वान्नारायणसंज्ञायुक्तं भवति। यथार्हमिति वचनादन्यैरपि दोषव्याधिविपरीतैर्द्रव्यैः पानमिदं दर्शयति॥१०॥

दन्तीत्यादौ।—गवाक्षी गोरक्षकर्कटी शङ्खिनी श्वेतबुह्णा।
सक्षीरमित्यादौ—माहिषं मूत्रं पलमेकं द्वयं वा पीत्वा विरेके सति

अर्कपत्रं सलवणमन्तर्धूमं दहेत्ततः।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम्॥
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः।
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः॥
गृहीत्वा यस्य संज्ञां पाटयित्वेन्द्रवारुणीमूलम्।
प्रक्षिप्यते सुदूरे प्राम्यॆत् प्लीहोदरं तस्य॥
रोहितकाभयाक्षोदभावितं मूत्रमम्बु वा।
पीतं सर्व्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत्॥ ११॥
देवद्रुमं शिग्रुमयूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम्।
पीत्वाशु हन्यादुदरं प्रवृद्धं क्रिमीन् सशोथानुदरञ्च दूष्यम्॥
दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्वाथः।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च॥
हरीतकीनागरदेवदारुपुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतश्च पेयः शोथोदराणां प्रवरः प्रयोगः॥
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।

---

गोक्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति। अर्कपत्रं सलवणमिति सैन्धवेन तुल्यं परिणतार्कपत्रं गृह्णन्ति पीत इत्यादौ।—पिप्पल्यादिद्रव्यचतुष्टयं प्रक्षेप्यम्। रोहितकहरीतक्योश्चूर्णकर्षेण पलद्वयपरिमितं गोमूत्रमम्बु वा खाद्यमिति केचित् अन्ये तु रोहितकहरीतक्योः क्षोदैः खण्डखण्डरूपैः शिलायां किञ्चिदवक्षुण्णैः सप्ताहं भावितं मूत्रमम्बु वेत्याहुः। वाग्भटप्रामाण्यात्॥ ११॥

इदानीं उदरोपद्रवभूतशोथसम्बन्धे सति चिकित्साविशेषमाह देवद्रुममित्यादि। मयूरकमपामार्गम्। मूत्रमत्र योगद्वयेऽपि, मूत्रेण पेषणं पानञ्चेत्याहुः। जेज्जटोऽप्यनिकायान्तु देवद्रुमादि अश्वगन्धान्त एकोयोगः अथवा शब्दोऽपि पूर्व्वयोगापेक्षया इत्युक्तं व्यवहारस्तु योगद्वयेनेति। दशमूलेत्यादौ।—क्वाथ इत्यत्र युक्त इति पाठे क्वाथ

निहन्ति वातोदरशोथशूलं क्वाथः समूत्रोदशमूलजश्च ॥
पुनर्नवा निम्बपटोलशुण्ठीतिक्ताभयादार्व्वमृताकषायः ।
सर्व्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥

पुनर्नवाष्टकः ।

पुनर्नवां दार्व्वभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोथोदरपाण्डुरोगस्थौल्यप्रसेकार्द्धकफामयेषु ॥
गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम् ।
क्षीरान्नभुक् केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु ॥
पुनर्नवा दार्व्वमृता पाठा बिल्वं श्वदंष्ट्रिका ।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम् ॥
समभागानि संचूर्ण्य गवां मूत्रेण ना पिबेत् ।
बहुप्रकारं श्वयथुं सर्व्वगात्रविसारिणम् ॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततण्डुलम् ।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसं ततः ॥

---

इति शेषः । हरीतक्यादौ ।— प्रतिदिनोपयोगे गुग्गुलोर्म्माषकचतुष्टयं गोमूत्रस्यार्द्धपलं कर्षो वा प्रक्षेपः । विरेचने तु कर्त्तव्ये प्रचुरत्वमनयोः । अत्रान्नबद्धकोष्ठे तु गोमूत्रेणैव क्वाथं कृत्वा गुग्गुलुमात्रं प्रक्षिप्य व्यवहरन्ति । एरण्डतैलप्रक्षेपाद्दुग्धमल इत्येको-योगः, गोमूत्रप्रक्षेपात्त्रिफलाक्वाथ इति द्वितीयः अत्यन्तबद्धकोष्ठे गोमूत्रेणैव त्रिफलाक्वाथ इति वदन्ति । एवं गोमूत्रप्रक्षेपाद्गोमूत्रेण दशमूलक्वाथं कृत्वाऽपि चेत्याहुः । पुनर्नवेत्यादि ।— पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयं तथाच तन्त्रान्तरे— पिबेद्गुग्गुलु-संयुक्तं शोथोदरविनाशनमिति । अत्र हरीतकी गुग्गुलुश्च मिलित-तच्चूर्णसम इत्याहुः अन्ये तु पुनर्नवादीनां क्वाथे गोमूत्रं गुग्गुलुञ्च प्रक्षिप्य व्यवहरन्ति । क्षीरं गवां वा त्रिफलाविमिश्रमिति त्रिफलायाः

हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धोभिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ १२ ॥

दशमूलकषट्पलकं घृतम् ।

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलैः पलिकैः ।
सिद्धं घृतार्द्धपात्रं हिमस्तुकमुदरगुल्मघ्नम् ॥ १३ ॥

चित्रकघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ १४ ॥

बिन्दुघृतम् ।

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट् ।

---

क्वाथः कल्को वा । क्षीराशभूमिति क्षीरमात्रेणान्नभुक् । पुनर्नवेत्यादौ ।—बिल्वस्य मूलं शोथोदराष्टहरावति सशोथान्यष्टावुदराणीत्यर्थः । पुराणमित्यादि पुराणमानस्य मूलं पलमात्रं दरदलिततण्डुलस्य पलद्वयं क्षीरतोयाभ्यां समाभ्यां साधयित्वा पायसः कार्य्यः अस्योपयोगे परमान्नव्यञ्जनं नाश्नीयादित्याहुः योगोऽयं शोथमात्रेऽपि प्रभवति ॥ १२ ॥

दशमूलषट्पलके ।—दशमूलस्य तुलार्द्धं पञ्चाशत्पलानि तस्य क्वाथ इत्यर्थः घृतस्यार्द्धपात्रमर्द्धाढ़कं प्रस्थद्वयमित्यर्थः । हिमस्तुकमिति घृतमपेक्ष्य द्विगुणं मस्त्वित्यर्थः । चरकोक्तदशमूलषट्पलके द्विशब्दः प्रस्थेन तथार्द्धपलिकैरित्यनेन च योज्यः तेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपलैः षट्पलानीति भवन्ति तथा प्रस्थेन च द्विप्रस्थात् प्रस्थद्वयं भवतीति एकवाक्यता बोध्या ॥ १३ ॥

चतुर्गुणेत्यादि ।—अत्र क्षार इत्यनेन क्षारस्यापि च पलमेकं देयं क्वाथार्थं तन्त्रान्तरे यथा अग्निक्षारपलाभ्यां द्विमूत्रं चतुर्जलं च घृतप्रस्थमिति ॥ १४ ॥

अर्कक्षीरेत्यादि ।—श्यामा श्याममूला त्रिवृत् । त्रिदकर्णिका

पथ्या कम्पिल्लकं श्यामा शम्याकं गिरिकर्णिका॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकन्तथा।
एतेषां पलिकैर्भागैर्घृतमस्थं विपाचयेत्॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत्
यावतोऽस्य पिबेद्विन्दूंस्तावद्वारान् विरिच्यते॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥
एतद्विन्दुघृतं नाम येनाभ्यक्तोविरिच्यते॥१५॥

नाराचघृतम्।

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपरिकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च॥
स्नुक्क्षीरदन्तीत्रिफलाविड़ङ्गसिंहीत्रिवृच्चित्रककल्कयुक्तम्॥
घृतं विपक्कं कुड़वप्रमाणं तोयेन तस्याक्षमथार्द्धकर्षम्।

---

श्वेतापराजिता, नीलिनी नीलवल्ली अत्र पाकार्थं जलं चतुर्गुणं देयम्, अतएव क्वचित् ग्रन्थसंग्रहे दृश्यते स्नुहार्कयोस्तु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं विन्दुसर्पिषीति। मात्रा तु कोष्ठानुरूपा माषकमेकं द्वयं वा प्रचरति मलिन इति मलबद्धे॥१५॥

दधिमण्डेत्यादि।— तद्वदेति पूर्व्वोक्तप्रकारेणोत्थितादघृतात्। चरके हि क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धसहितम्। दधीति पूर्व्वयोगे क्षीरद्रोणे सुधाक्षीरप्रस्थार्द्धं प्रक्षिप्य, दधि करणीयं ततः तद्दधि मथित्वा घृतं सम्पादनीयमिति प्रकार उक्त इति। तथा सिद्धमित्यादि।- अत्रापि पर्व्वोक्तप्रकारनिष्पादितदधिमन्थनसिद्धं घृतमिति तथा शब्दार्थः। एतयोर्घृतयोरनुपानं तथा विरेकान्तरीयोविधिश्च चरकोक्त

पीत्वोष्णमम्भोऽनुपिबेद्विरिक्तो पेयां सुखोष्णां वितरेद्विधिज्ञः॥
नाराचमेतज्जठरामयानां युक्तोपयुक्तं प्रशमं प्रदिष्टम् ॥ १६ ॥

इति सर्व्वोदरचिकित्सा।

---

## अथ प्लीहाधिकारः।

यमानिकाचित्रकयावशूकषड् ग्रन्थिदन्तीमगधोद्भवानाम्
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्व्वा॥
पिप्पलीं किंशुकक्षारभावितां संप्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम्॥
विड़ङ्गाज्याग्निसिन्धूत्थयक्तून् दग्ध्वा वचान्वितान्।
पिबेत् क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहम्॥ १॥
तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशन।
क्षारं वा विड़ङ्गकणाभ्यां पुतीकस्याग्निनिस्रुतम्॥

---

एवानुसरणीय इति। स्नुहीक्षीरेणादौ।—सिंही कण्टकारी, युक्तोपयुक्तमिति कोष्ठाद्यग्निबलापेक्षया इत्यर्थः॥ १६ ॥

इत्युदराधिकारः।

---

प्लीहरोगस्य उदरसम्भवादनन्तरं प्लीहचिकित्सामाह यमानीत्यादि।—षड् ग्रन्थिपिप्पलीमूलं उक्तं हि रत्नकोषे—"ग्रन्थिकं पिप्पलीमूलं षड्ग्रन्थि चटिका शिव" इति। पिप्पलीमित्यादि।—किंशुकः पलाशः तत्क्षारोदके बहुधा भावितां पिप्पलीम्। पिप्पलीवर्द्धमानक्रमेण योजयेत् दुग्धपानमप्यत्रोपदिशन्ति वृद्धाः। विड़ङ्गेत्यादि।—विड़ङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दहेदित्यर्थः। ततः संचूर्ण्य क्षीरेण पिबेत्। अन्ये तु कपाले कृत्वा एवमेव दहेत् न पुनरन्तर्धूममित्याहुः। व्यवहारस्तु पूर्व्वेणैव॥ १॥

तालपुष्पेत्यादावन्तर्धूमक्षार इति। सगुड़ः समगुड़ः। क्षारस्य च माषकचतुष्टयेन व्यवहारः। क्षारं वेत्यादि।— पूतिकस्य नाटाक-

प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम्।
पातव्योयुक्तितः क्षारः क्षीरेणोदधिमुक्तिजः॥
पयसा वा प्रयोक्तव्याः पिप्पल्याः प्लीहशान्तये॥२॥
भल्लातकाभयाजाजीगुडेन सह मोदकः।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम्॥
शोभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम्।
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत्॥
तिलान् सलवणांश्चैव घृतं षट्पलकं तथा।
प्लीहोद्दिष्टां क्रियां सर्व्वां यकृतः संप्रयोजयेत्॥
लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत्।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये॥
प्लीहजिच्छरपुङ्खायाः कल्कस्तक्रेण सेवितः।
शरपुङ्खरसं सर्व्वत्र लब्धा पेयाभुजाथवा॥
शार्द्दिष्ठानिर्यूहः ससैन्धवतिन्तिडीकसंमिश्रः।

रङ्गस्य मूत्रक्षारम्। अम्ल इति काञ्जिकं निस्नुतमिति सप्तधा परिस्नुतं अम्लपरिस्नुतं पूतिकरञ्जक्षारं विड्लवणपिप्पलीप्रक्षेपेण पाचयेदित्यर्थः तेन अम्बुनि जले निस्नुतमनर्थं एव वाशब्दः पूर्व्वयोगापेक्षया उदधिमुक्तिजः मुक्ताफोटः। युक्तित इति वचोवक्ताद्यपेक्षया पयसा वेत्यादि श्लोकार्द्धं वृन्देन पठ्यते तद्ग्रन्थाग्रकसंघपक्षेऽपि केचित् पठन्तिः किन्तु वृन्दे पिप्पलीवर्द्धमानं न पठ्यते। तत्र तत् पाठो न दृश्यत एव इह च अपि वर्द्धमानं व्यक्तमेवेति तस्मात् पयसेति श्लोकार्द्धंमत्र न पठनीयमेवेति॥२॥

भल्लातकेत्यादि।—स्पष्टम्। शोभाञ्जनेत्यादौ निर्यूहः क्वाथः, अग्निचित्रकः, पलाशक्षारयुतं वेति पलाशक्षारोदकयुक्तं तच्च पक्वात्। तिलान् सलवणानिति कृष्णतिलाएव ससैन्धवा भक्ष्याः पश्चात् तिलनालक्षारोदकं सलवणं पेयमित्यर्थः अवहारश्च पूर्व्वमेव घृतं षट्पलकमिति व्यरोक्तम्।

शीघ्रञ्च परमोयोगः पक्वाम्ररसोऽथवा समधुः॥
रोहितकाभयाक्वोदभावितमूत्रमथ वा।
पीतं सर्व्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत्॥३॥
दध्ना भुक्तवतोवामबाहुमध्ये शिरां भिषक्।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे।
प्लीहानं मर्द्दयेद्गाढ़ं दुष्टरक्तप्रवृत्तये॥४॥

माणाद्यगुड़िका।

माणमार्गीच्छतावासाशिराचित्रकसैन्धवम्।
नागरं तालखण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम्॥
विड़सौवर्च्चलक्षारपिप्पल्यश्चापि कार्षिकाः।
एतच्च चूर्णितं सर्व्वं गोमूत्रस्याढके पचेत्॥
सान्द्रीभूते गुड़ीं कुर्य्याद्धत्वा त्रिपलमाक्षिकम्।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः॥
योगः परिकरोनाम्ना चाग्निसन्दीपनः परः॥५॥

---

समधुनमित्यादौ।—गोमूत्रगण्डूषेणानुपानम्। शरपुङ्खाया इत्यादि शरपुङ्खामूलस्य, शिंशपा काकजङ्घा गुञ्जा वा। तत्त्रिक्तोक्तं मण्डूकम्। पक्वाम्ररसः मधुना वातोल्वने। रोहितकेत्यादौ क्षोदस्थं गोमूत्रं विरेकार्थं वस्तु तु शमनार्थमिति व्यवस्था॥३॥

दध्नेत्यादौ।—दधिभोजनं शोणितोत्क्लेशार्थं वामबाहुमध्ये कूर्परसन्धिरधस्तात् कण्डराव्यवधानं बाहौ समुत्पन्नात्‌ प्लीहानं मर्द्दयेदिति शिरायां विद्धायां तेन प्लीहोद्भूतरक्तं निःसरति॥४॥

माणेत्यादौ।—मार्गीऽपामार्गः शिराशाकपर्णी, प्रत्यग्रमित्यभिनवम्। त्रिकार्षिकमिति प्रत्येकम्। परिकरो नाम्ना इति परिकरोविटकः॥५॥

पिप्पलीवर्द्धमानानि।

पिप्पलीनागरं दन्ती समांशं द्विगुणाभयम्।
चूर्णं पीतं विडार्द्धांशं शीतमम्बुष्णवारिणा॥
क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा।
पिप्पलीनां प्रयोगोऽयं सहस्रस्य रसायनः॥
दशपैप्पलिकः श्रेष्ठोमध्यमः षट् प्रकीर्त्तितः।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः॥
वृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम्।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम्॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः।
पिष्टास्तावलिभिः पेयाः श्रुतामध्यबलैर्नरैः॥
शीतीकृताल्पबलैर्दोषामयान् प्रति॥ ६॥

---

पिप्पलीमित्यादौ।—द्विगुणाभया इत्येकभागापेक्षया द्वैगुण्यं यत्र विडलवणस्याप्येकभागापेक्षयाऽर्द्धभागत्वं ज्ञेयम्। पिप्पलीवर्द्धमानमाह क्रमेत्यादि।—दशपिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपिप्पलिकं तेन दशपिप्पल्यः प्रत्यहं वर्द्धनीया इत्यर्थः। उक्तं हि दशभिर्दशभिः यस्तु पिप्पलीभिस्तु वर्द्धयेदिति। अतश्चोनविंशतिदिने वृद्धिहानिक्रमेण सहस्रं पूर्णं भवति। पयसा सार्द्धमित्यनेन पयसोऽपि वृद्धिरित्याहुः। केचित्तु चूर्णीकृता इत्यत्र शीतीकृता इति पठित्वा शीतकषायीकृता इति व्याख्यानयन्ति। पिप्पलीवर्द्धमानस्य त्रैविध्यमाह दशपैप्पलिकइत्यादि। षट्प्रकीर्त्तिता इति षड्वृद्ध्या प्रयोक्तव्या इत्यर्थः। त्रिपिप्पलीपर्य्यन्त इति तिस्रः पिप्पल्यः पर्य्यन्तो यस्य स तथा तेन पिप्पलीत्रयेण यत्र वृद्धिः प्रयोग उच्यते तत्रैव प्रयोगसमाप्तौ पिप्पलीत्रयावस्थानात्। षड्भिः पिप्पलीभिस्तु व्यवहार इति प्रतिपादयितुं मङ्गः स्ववचनं पिन्यस्यति पञ्चपिप्पलिक इत्यादि

चित्रकघृतम्।

पिप्पलीचित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत्।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम्॥ ७॥

पिप्पलीघृतम्।

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पचेत् प्लीहाग्निसादादि यकृद्रोगहरं परम्॥ ८॥

चित्रकघृतम्।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम्॥
पञ्चकोलकतालीशक्षारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत्॥
प्लीहगुल्मोदराध्मानपाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरुशूलोदावर्त्तपीनसान्॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति॥ ९॥

रोहितकं घृतम्।

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः॥

---

विदेहेऽप्युक्तं—दशभिर्दशभिः शश्वत् पिप्पलीभिस्तु वर्द्धयेत्। पञ्चभिः पञ्चभिर्वापि शतादवतरेत् पुनरिति॥ ६॥

पिप्पल्यादि।—अत्र पिप्पली च चित्रकश्चेति समासो न कार्यः, तथा सति पिप्पलीमूलस्यैव ग्रहणं स्यात् तच्च न व्यवहारसिद्धम्। पिप्पलीघृतं स्पष्टम्॥ ७—८॥

चित्रकघृते तुलाक्वाथ इति षष्ठीतत्पुरुषः। आरनालन्तु द्विगुणमिति घृतापेक्षया एवं दधिमण्डस्यापि चातुर्गुण्यम्, दधिमण्डो-दधिमस्तु, क्षारो यवक्षारः, लवणं सैन्धवम्, अन्ये तु यवक्षारः सर्जिक्षारः, लवणं पञ्चलवणमाहुः॥ ९॥

अभयादारुमधुकं तिक्ता इन्द्री सपिप्पली ।
पटोलं चन्दनं दार्व्वी त्रायमाणेन्द्रवारुणी॥
एषां क्वाथः ससर्पिष्कः क्षयथुज्वरदाहहा ।
विसर्पतृष्णासन्तापसन्निपातविषापहा ॥
शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत् ॥ १ ॥
पुनर्नवानिम्बसितष्टगुग्गुलू बो सम्पाकपथ्यामरदारुकल्कम् ।
शोथे कफोत्थे महिषाख्ययुक्तं मूत्रं पिवेद्वा सलिलं तथैषाम् ॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥
अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ।
शोथं त्रिदोषं चिरजं प्रदृष्टं निघ्नन्ति भूनिम्बमहौषधे च ॥ २ ॥

---

द्वितीयोयोगः । अभयेत्यादौ सर्पिः प्रक्षेप्यम् । शीतवीर्य्यैरिति शीतवीर्य्याः काकोल्यादि शारिवाद्युत्पलादिगणाः तत्कृतैः स्नेहादिभिरभ्यङ्गादीन् कल्पयेत् । हिमजलैरिति शीतजलैः ॥ १ ॥

श्लैष्मिकशोथचिकित्सामाह पुनर्नवेत्यादि पुनर्नवादीनां कल्कं गुग्गुलुयुक्तं गोमूत्रेण पिवेत् । सलिलं तथैषामिति एषां पुनर्नवादीनां क्वाथं, गुग्गुलुं गोमूत्रञ्च प्रक्षिप्य पिबेदिति महिषाख्यो गुग्गुलुः । कफेत्यादौ सिकतावालुका, पुराणपिण्याकः पुराणसर्षपखलिः, उमा अतसी एभिर्मूत्रपिष्टैर्लेपः तथा कुलत्थशुण्ठीक्वाथेन तथा गोमूत्रेण कुलत्थशुण्ठीसिद्धेन सेकः कार्य्यः। चण्डा चोरपुष्पी, अनुलेपनं स्नानानन्तरमेव लेपनमिति चक्रः । अजाजीत्यादि वाभटस्य एषां चूर्णमुष्णोदकेन पेयम् । एवं भूनिम्बमहौषधयोरपि । यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पठ्यते तथापत्र चविकैव पाह्या गजपिप्पलीशब्देन चविकाभिधानात् यदुक्तं निघण्टे—" चविकाकोलवल्ली च हस्तिपिप्पल्युपीच्यते " इति । जतूकर्णेनापि चविकैव पठ्यते तस्मात् सैव युक्ता एतेन पिप्पल्यादिगणेनापि चविके पठ्यते द्वयम् । योगेऽत्र चविकास्थाने पाह्या मातङ्ग-

पुनर्नवाष्टकः।

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्वभयाकषायः।
सर्व्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति॥
आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः।
अजाक्षीराशिनां शीघ्रं सर्व्वशोथहरोभवेत्॥
पुनर्नवादारुशुण्ठीक्वाथे मूत्रे च केवले।
दशमूलरसे वापि गुग्गुलुः शोथनाशनः॥
विल्वपत्ररसं पूतं सोषणं श्वयथौ त्रिजे।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि॥
गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनम्।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम्॥
पुरोमत्रेण सेव्येत पिप्पली वा पयोऽन्विता।
गुड़ेनवाभया तुल्या विश्वं वा शोथरोगिणाम्॥ १॥
गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयं वा गुड़पिप्पलीं वा
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम्॥

---

पिप्पलीति इन्दोक्तमतमपास्तम्। ननु चरके त्रिदोषजशोथस्यासाध्यत्वेनोक्तत्वात् कथं त्रिदोषजं शोथं कृच्छ्रोक्त नैवं चरके श्लीन-मांसस्येत्यादिना पञ्चैनैकदोषस्य तथा नवस्य च सुखसाध्यत्वाभिधाने द्विदोषत्रिदोषजयोस्तथा चिरजस्य च कृच्छ्रसाध्यत्वमुक्तं मांसहीने पुनरसाध्यत्वमिति॥ २॥

पुनर्नवेत्यादि।— तिक्ता कटुकी दारु देवदारु इत्येवं योगः शोथोदरे पठ्यते। गुड़ेत्यादि।— गुड़ एकभागस्तुल्यः। पुरं गुग्गुलुः। पिप्पली वा पयोन्वितेति पिप्पलीवर्द्धमानन्यायेन दशरक-त्वचवृ। पिप्पलीकल्कः पयसा सेव्यः। विश्वं वेति गुड़ेन तुल्यमित्यत्रापि योज्यम्॥ १॥

गुड़ार्द्रकं वेत्यादि गुड़ार्द्रकादयश्चत्वारोयोगा एते तुल्यभागाः

शोथप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसांश्च ।
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात्तथान्यान् कफवातरोगान् ॥ ४ ॥
स्थलपद्ममयं कल्कं पयसा लोड्य पाययेत् ।
श्लीपदामयहरश्चैव सर्वाङ्गकाङ्गशोथजित् ॥
दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित्
वर्षाभुशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥
सिंहास्यामृतभण्टाकीक्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं वमिं ज्वरम् ॥
भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ।
अपहरति नियतमाशु शोथं सर्वाङ्गगं नृणाम् ॥
शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाम्भसा ।

---

सन्तः प्रतिदिनं मिलित्वा वर्द्धयितव्याः । एवं द्वादशभिर्दिनैस्त्रिपलं पर्य्यन्ते तत्त्रिपलं कृत्वा प्रत्यहं पक्षं मासं वा यावत् खादेत् किम्वा प्रथमदिने कर्षमेकं खादेत् ततः कतिचिद्दिनानि कर्षस्यैवाभ्यासः ततः परमपरकर्षं वर्द्धयेत् तस्यापि पुनरभ्यासः । एवं कर्षेण कर्षेणाभिवृद्ध्या यथा पक्षेण मासेन वा त्रिपलं भवति तथा कार्य्यम् । अन्ये तु ब्रुवते पक्षशब्दोऽप्यर्धापिशब्दो मासमित्यनन्तरं सोऽयं च समुच्चयार्थः तेन पक्षं मासञ्च व्याप्य सार्द्धं मासं व्याप्येत्यर्थः सार्द्धमासेन त्रिपलं कर्षोपयोगात् पश्चात् प्रत्यहं माषचतुष्टयाधिकविधिना भवति अस्मिन् व्याख्याने कर्षादारभ्य माषचतुष्टयमेव वृद्धिनाधिकं व्यवहारोऽपीत्थमेव ॥ ४ ॥

स्थलपद्ममयं कल्कमिति स्थलपद्मं मानकन्दः स च पुराणोऽप्याह्यः कल्कमिति चूर्णम् ॥ दार्व्वित्यादि स्पष्टम् । वर्षाभ्वित्यादि चरकयोगोमूत्रेणैव पानम् । सिंहास्यं वासकमूलं भण्टाकी कण्टकारी । भूनिम्बेत्यादौ ।— पयः पुनर्नवाक्वाथ इत्यनुपानमिदं एतच्च पुनर्नवाकल्कर्षं निक्वाथ्य कार्य्यम् । ततोऽधिकमात्राकरणे भूरिभेषजत्वेनाग्निवधादिदोषः स्यादितिभावः एवं सर्वत्र क्वाथेनानुपानं ज्ञेयम् ।

घोरं शोथहरं दारुवर्षाभुनागरैः शृतम्॥
पेयं वा चित्रकव्योषविडङ्गाद्यमथाधिकम्॥ ५॥

क्षारगुडिका।

पुनर्नवामूलकपित्थदारुहिङ्ग्वोङ्गराचित्रकमूलपिष्टाः।
रसायवाग्वश्च पयांसि यूषाः शोथे प्रदेयाद्यमूलगर्भाः॥
क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजोव्योषफलत्रिके च।
सपिप्पलीमूलविडङ्गसारं मुस्ताजमोदामरदारुविल्वम्॥
कलिङ्गकचित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलाशम्।
सहिङ्गु कर्षं तनुसूक्ष्मचूर्णं द्रोणस्तथा मूलकशुण्ठकानाम्
स्याद्भस्मनस्तत्सलिलेन साध्य-
मालोड्य यावद्घनमप्यदग्धम्।
स्यात्ततस्तैः कोलसमाश्च मात्राः
कृत्वा शुष्का विधिना प्रयुञ्ज्यात्॥
प्लीहोदरश्वित्रहलीमकार्शःपाण्डुामयारोचकशोथशोषान्।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रणुदेत् सकुष्ठान्।
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च।
चतुर्लवणमुक्तं स्यात्सामुद्रेणा भवेत्॥ ६॥

---

शोथघ्नमित्यादि।—अस्येत्यन्तएकोयोगः मलेवा कफे, अन्यथा पित्ते।
पेयमित्यन्तो द्वितीयः। चित्रकेत्यादि तृतीयः, अत्रापि घोरमिति
वाच्यम्॥ ५॥

पुनर्नवेत्यादौ।—कपित्थस्य फलं पुनर्नवादीनाञ्चाद्धंस्हतं कृत्वा
तन्मूलस्यानुरूपं कल्कं दत्वा रसादयः साध्या इत्यर्थः। क्षारेत्यादि।—
क्षारद्वयं यवक्षारसर्जिक्षारौ लवणानि चत्वारि इति सामुद्रवर्जानि
अयोरजः लौहचूर्णं मारितपुटितं ग्राह्यम्। पलांशमिति प्रत्येकम्,
तनुसूक्ष्ममिति सूक्ष्मसूक्ष्मचूर्णमित्यर्थः। सकलित्रिकेणेति क्षारद्वयादि-
चूर्णोपेक्षया चतुर्गुणेन अन्ये त्वष्टगुणमाहुः। अत्र मूलकभस्मद्रो

पुनर्नवाद्यं घृतम् ।

पुनर्नवाचित्रकदेवदारुपञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिसूदनञ्च ॥

पञ्चाढ़ं घृतम् ।

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः ।
पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥
पुनर्नवाक्वाथकल्कसिद्धं शोथहरं घृतम् ।
विश्वौषधस्य कल्केन दशमूलजले घृतम् ॥
एतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम् ॥ ७ ॥

चित्रकाद्यं घृतम् ।

सचित्रकाधान्यसमाजमोदाः सदीप्यकत्र्यूषणवेतसाम्लाः ।
बिल्वात् फलं दाड़िमयावशूकं सपिप्पलीमूलमयापि चव्यम् ।
पिष्ट्वाक्षमात्राणि जलाढ़केन पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात् ॥
अर्शांसि गुल्मान् श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ ८ ॥

---

चक्रटीकां [illegible] जलं [illegible] भागावशिष्टं वा क्वाथं ततः परिस्राव्य तत [illegible] [illegible]र्णमेलया चतुर्गुणां क्षारजलं दत्त्वा पक्तव्यं पाकाय घनीभूते जाते क्षारद्रव्यादिचूर्णप्रक्षेप इत्याहुः ॥ ६ ॥

पुनर्नवेत्यादौ । पञ्चोषणं पञ्चकोलम् । रस इत्यादि ।— रसः क्वाथ इत्यर्थः । पञ्चकोलकुलत्थयोरिति द्विवचननिर्देशात् पञ्चकोलस्य मिलित्वा एकोभागः अपरश्च कुलत्थस्येति वदन्ति पाण्डुतामयमिति पाण्डुरोगम् ॥ ७ ॥

सचित्रकेत्यादौ ।— दीप्यकं जीरकं वेतसाम्लोऽम्लवेतसः बिल्वात् फलमित्यत्र बिल्वात् पत्रमिति न पाठः वाभटे बालबिल्वं कर्षांशनिर्दिष्टत्वात् ॥ ८ ॥

चित्रकघृतम्।

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलकल्कं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम्।
अर्शोऽतिसारानिलगुल्ममेहांश्चाहन्ति संवर्द्धयते बलञ्च।

माणकघृतम्।

माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति॥ ८॥

स्थलपद्मकं घृतम्।

स्थलपद्मपलान्यष्टौ तु भव्यस्य चतुःपलम्।
घृतप्रस्थं पचेद्भिः क्षीरं दत्त्वा चतुर्गुणम्॥
पञ्चकासान् हरेच्छ्वासं शोथञ्चैव सुदुस्तरम्॥

शैलेयाद्यं तैलम्।

शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसीतालीशपत्रप्लवपत्रधान्यैः॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चापि यथोपलाभम्।
वातान्वितेऽभ्यङ्गमुषन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम्॥ १०॥

---

क्षीरमित्यादौ — दध्यागतमिति दधिभावेन परिणतं तेनेह मथितं दधिमथनजनितेन तक्रेणेत्यन्वयः। तज्जं घृतमिति मथितोद्धितभवं घृतमिति। माणकघृते माणककाथार्थमष्टगुणं जलं देयं ननु चतुर्गुणं तथा सति यवागूवत् क्वाथः स्यात् अन्ये तन्त्रान्तरदर्शनात् माणककल्कस्य पचनं तोयद्रोणे पक्त्वा कुर्वन्ति व्यवहारस्तु पूर्वेण। माणककल्कं चाद्रमेव कुर्वन्ति वृद्धाः॥ ८॥

स्थलपद्मघृते स्थलपद्मं माणककन्दमेव वृषपर्णमिति केचित्। चतुः-पलं भल्लयेऽत्रादौ।— कौन्ती रेणुकं पद्माख घटो स्थौणेयं ग्रन्थिपर्णं तालीशपत्रादत्र मकारस्य लोपः। हेम नागकेशरं प्लवः कैवर्तमुस्तकं श्रीवेष्टको नवनीतखोटी, ध्यामकं गन्धतृणं एषां कल्कं तत्र चतुर्गु-

शुष्कमूलाद्यं तैलम्।

शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः।
पक्वमभ्यञ्जनात्तैलं सशूलं श्वयथुं जयेत्॥

पुनर्नवालेहः।

पुनर्नवामृतादारुदशमूलरसाढके।
आर्द्रकस्वरसे प्रस्थे गुडस्य तु तुलां पचेत्॥
तत्सिद्धं व्योषचव्यैलात्वक्पत्रैः कार्षिकैः पृथक्।
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुडवं लिहेत्॥
लेहः पौनर्नवो नाम शोथशूलनिषूदनः।
श्वासकासाऽरुचिहरो बलवर्णाग्निवर्द्धनः॥ ११॥

दशमूलहरीतकी।

दशमूलकषायस्य कंसे पथ्याशतं पचेत्।
तुलां गुडाद् घने दद्याद्व्योषक्षारं चतुःपलम्॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे।
दशमूलीहरीतक्यः शोथान् हन्युः सुदारुणान्॥
ज्वरारोचकगुल्मार्शोमेहपाण्डूदरामयान्।

---

पाकमर्थात्। यथोपलाभमिति यथालाभं तैलसिद्धं सुपिष्टैरिति शुण्ठ्या-दिभिः सुपिष्टैस्तैलं सिद्धमुषन्ति तथा तैरेव सुपिष्टं प्रदेहं चोपदिशन्ति कथयन्ति॥१०॥

पुनर्नवेत्यादौ।— पुनर्नवादीनां दशमूलान्तानां मिलित्वा चतुःषष्टि-पलानि जलस्य चतुःषष्टिशरावाः शेषन्तु आढकः। व्योषेत्यादि।— पृथगर्थे उपलक्षणे वा तृतीया। मधुनः कुडवमष्टौ पलानि। शूल-शोथनिषूदन इति पाठान्तरं आयुर्वेददीपिकाकारोऽपि कफशोथविनाशन इत्युक्तः॥११॥

दशमूलेत्यादि।— कंस इत्याढकं जल कषायस्य कंसमानताभि-हितेन अनुक्तेऽपि क्वाथ्य जलद्रोणमनुमीयते यतः क्वाथे कंसचतुः-

लेपोऽरुष्करशोथं निहन्ति तिलदुग्धमधुनवनीतैः।
तत्कृतलसुङ्गिर्वा शालदलैर्वा तु न चिरेण॥
शोथे विषनिमित्ते तु विषोक्ता सकला क्रिया।
ग्राम्याब्जानूपपिशितलवणं शुष्कशाकं नवान्नम्॥
गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम्।
धानावल्लूरं समशनमथो गुर्व्वसात्म्यं विदाहि॥
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च॥१२॥
इति शोथचिकित्सा।

---

## अथ वृद्ध्यधिकारः।

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम्॥१॥

---

ग्राम्येत्यादौ।—पिशितञ्च लवणञ्चेति समाहारः तस्य विशेषणं ग्राम्याब्जानूपमिति तत्र छागादिमांसं ग्राम्यं लवणञ्च यत् ग्रामेनोद्भूतं तत् ग्राम्यम्। अब्जं कच्छपादि लवणञ्च सामुद्रं करकचेति ख्यातं तज्जं आनूपं शूकरादिमांसं लवणञ्च समुद्रतीरजं यत्सौवर्चलं ख्यातं तद्ग्राम्यानूपं गौड़ं गुड़विकारं धाना भ्रष्टयवाः। वल्लूरं शुष्कमांसं। समशनं पथ्यापथ्यं एकत्र भोजनम्। अरात्राविति दिने॥१२॥
इति शोथाधिकारः।

---

पूर्व्वोक्तवक्तव्यैव शोथानन्तरं वृद्धिब्रध्नचिकित्सितमुच्यते। वृद्धिः कुरण्डः। गुग गुलुमित्यादि। गोमूत्रपलद्वये एरण्डतैलपिष्टगुग गुलुमाषकाष्टकं प्रक्षिप्य पेयम्। तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेकं प्रक्षिप्य पिबेत्। इमौ योगौ क्रमात् कफानुबन्धे वाते च योज्याविमाउः॥१॥

यष्टीरं वा पिबेत्तं मासमेरण्डसंज्ञम्।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा।
पाने बस्तौ स्नेहोक्तैलं पेयं वा दशकावधमा ॥ २ ॥
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रलेपः स्याद्दाहशोथरुजापहः ॥
पद्मकल्ककल्केन सघृतेन प्रलेपनम्।
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम्॥
श्लेष्मोद्भवं तु पचेच्छ्लैष्मिकैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम्। ३ ॥
स्निग्धं मेदःसमुत्थं तु लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः। ४ ॥
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत्।
सीवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ॥ ५ ॥

---

यष्टीरमित्यादौ।— सुश्रुतस्य अयं योगः पित्तानुबन्धवृद्ध्याऽऽह। पुनर्नवातैलन्तु पुनर्नवाक्वाथकल्काभ्यां साध्यमित्याहुः पाने बस्ताविति वक्ष्यमाणे सम्बध्यते। स्नेहो अमेरण्डतैलम्। दशकस्य दशमूलस्य। कषायवा पेयमिति ॥ २ ॥

पैत्तिकवृद्धिमेनगमाह चन्दनमित्यादि।— पद्मं पद्मकेशरम्। रक्तजे रक्तमोक्षणमिति आक्रान्तं रक्तजवृद्धौ जलौकाभिः कार्य्यम्। सुश्रुतस्याऽऽहार। श्लैष्मिकैरिति अजगन्धादिभिः सुश्रुतोक्तैः। पीतदारु देवदारु गोमूत्रेणैव देवदारुक्वाथः कार्यं इत्याहुः। व्यवहारस्तु प्रक्षेपः विधया। वाग्भटेऽपि — गोमूत्रेण पिबेत् क्वाथं श्लेष्मजे पीतदारुजमिश्रुतम् ॥ ३ ॥

स्निग्धमित्यादौ।— सुश्रुतस्य गोमयपिण्डादिना स्वेदमुक्तम्। सुरसादिना सुरसादिगणेन। शिरोविरेचनद्रव्यैः पिप्पलीमरिचापामार्गादिभिः। मूत्रयुक्तैरिति मूत्रपिष्टैर्लेपयेदिति पूर्वेणान्वयः ॥ ४ ॥

कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥
सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसंयुक्तं शोथघ्नं कफवातनुत्॥
हरीतकी रुबुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः॥
गव्यं घृतं सैन्धवसंप्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं निहन्ति कुरण्डमतिप्रवृद्धम्॥
ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्दितम्।
तत्क्षणाद्गोपयसा पीतं सर्ववृद्धिनिवारणम्॥
रुद्रजटामूललिप्ता कारटव्यङ्गचर्म्मणा।
बद्धा वृद्धिः शमं याति चिरजापि न संशयः॥
निश्छिद्रमारनालेन रूपिकामूलवल्कलम्।
लेपोऽवृद्ध्यामयं हन्ति बद्धमूलमपि दृढम्॥
वचा सर्षपकल्केन प्रलेपो वृद्धिनाशनः॥ ८॥
लज्जालम्बुषमूलाभ्यां लेपो वृद्धिहरः परः॥ ९॥

---

गोमूत्रेत्यादौ।—पञ्चयोगापेक्षया अष्टामिति विशेषः। कोष्ण-जलानुपानमिति पाठपक्षे क्रियाविशेषणम्। त्रिफलेत्यादौ।— गो-मूत्रं प्रलेप्यम्। सरलेत्यादौ।— सरलं सरलकाष्ठं लेपोऽयं योगः। अष्ट इत्यादि स्पष्टम्। गव्यमित्यादि।— शम्बूकरूपभाण्डे, शम्बूकस्य वद्यस्तं पाच्यं न पुराणमित्याहुः। घृतात् षाटिकम्य सैन्धवमिति वदन्ति लेपविधया योज्यमेतत्। ऐन्द्री गोरक्षकर्कटी। रुद्रजटेति।— आदौ रुद्रजटाकल्केन लिप्ता ततः कारटः वटा इति ख्यातः मर्कटाकारः प्रायशोऽक्षोपरि तिष्ठति। तस्या व्यङ्गचर्म्मणा बद्धा वृद्धिर्निवर्त्तते। रूपिका अर्कमूलम्। ८।

लज्जेत्यादि।—लज्जा वराहक्रान्ता अम्लपत्रियोगमवं विद्यात्। ९।

मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः।
श्यामापूतिकरञ्जशिग्रुकतरोर्बिम्बीगवाक्षीकरम्॥
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितम्।
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं ब्रध्नहृत्॥१०॥
अवीक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद्ब्रध्नशूलहरं परम्॥
स्तनमात्रे तु वै कक्षे विप्रस्ते संप्रवेशयेत्।
ब्रध्नं मुहूर्त्तं मेधावी तत्क्षयाद्रुजं भवेत्॥
अजाजी हबुषा कुष्ठं गोधूमं बदराणि च।
काञ्जिकेन समं पिष्ट्वा कुर्याद्ब्रध्नप्रलेपनम्॥११॥

बृहत् सैन्धवाद्यं तैलम्।

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारुसनागरम्॥

---

संप्रति ब्रध्नचिकित्सामाह। ब्रध्नलक्षणं यद्यपि ह्यस्मिन्-ग्रन्थे नास्ति तथापि तन्त्रान्तरात् कर्त्तव्यम्। यथा अत्यभिष्यन्दि गुर्व्वा-मसेवनाच्चयं गतम्। करोति ग्रन्थिवच्छोथं दोषो वंक्षणसन्धिषु ज्वर-शूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेदिति। ब्रध्नस्य लोके वाघ-ी [illegible] इत्यादि मूलं षष्ठ्यन्तैः सर्व्वैर्योज्यम्। अरलुकः श्योनाकः। [illegible] अग्निश्चित्रकः, श्यामा वृद्धदारकः, पूतिकरञ्जो नाटाकरञ्जः, का[illegible] अन्यतमेन पानं प्रकृताद्यपेक्षया सेव्यम्॥१०॥

अवीक्षीरेणेत्यादि।— वाभटस्य अवीक्षीरेण गोधूमकुन्दुरुकौ पिष्ट्वा लेपः कार्य्यः एक एवायं योगः। वाशब्दः पूर्व्वयोगापेक्षया अतएव वाभटे वाशब्दस्थाने चकारः पठ्यते। अपरे तु योगद्वय-माहुः। स्तनमात्र इत्यपि वाभटस्य स्तनमात्र इति व्याख्यायते, वि-प्लुत इति क्रोष्टुं पाटयित्वा तत्र कोष्णं ब्रध्नं प्रवेशनीयं ततो बन्धः कार्य्यः॥११॥

सैन्धवाद्यतैले।— निचुलो वेतसः श्यामा त्रिवृतेति वैद्यव्याख्या-

कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम्॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च।
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत्॥
ब्रध्नोदावर्त्तगुल्मार्शः प्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात्॥
घृतं सौरेश्वरं योज्यं ब्रध्नवृद्धिनिवृत्तये॥१२॥
इति वृद्धिब्रध्नचिकित्सा।

---

## अथ गलगण्डाद्यधिकारः।

यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्।
छर्द्दिं रक्तमुक्तिञ्च गलगण्डे प्रयोजयेत्॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति॥
सर्षपान् शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥
गण्डानि ग्रन्थयश्चैव गलगण्डाः सुदारुणाः।
प्रलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात्॥
जीर्णकर्कारुकरसो विड़सैन्धवसंयुतः।
नस्येन हन्ति तरुणं गलगण्डं न संशयः॥

---

श्यामा। नीलिनी नीलवृक्षा चतुर्गुणजलेन पाकः। तैलं वेति विकल्पेन वा। सौरेश्वरघृतं वक्ष्यमाणम्॥१२॥
वृद्धिब्रध्नाधिकारः।

---

उक्तक्रमेणैव गलगण्डादयोऽभिधीयन्ते। तण्डुलोदकेत्यादि हस्तिकर्णपलाशस्य मूलेनेत्यन्वयः सर्वे गलगण्डाः वातकफमेदोभिरा-

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम् ।
पिवेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥
सूर्यावर्त्तरसोनाभ्यां गलगण्डोपनाहने ।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥
तिक्तालावुफले पक्वे सप्ताहमुषितं जलम् ।
मद्यं वा गलगण्डघ्नं पानात्पथ्यानुसेविनः ॥
कटुफलचूर्णान्तर्गलघर्षो गलगण्डमपहरति ।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ॥ १ ॥
महिषीमूत्रविमिश्रं लौहमलं संस्थितं घटे मासम् ।
अन्तर्धूमविदग्धं लिह्यान्मधुनाथ गलगण्डे ॥
जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः ।
तासां स्थूलशिरे कृष्णे विध्यात्ते च शनैः शनैः ॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान् ।
स्रुते रक्ते व्रणे तस्मिन् दद्यात् सगुडमार्द्रकम् ॥
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते ।
कर्णयुग्मस्य पश्चात् संस्पृश्याधारे स्थितश्चरेत् ॥
उपर्युपरि तच्छिन्द्याद्गलगण्डे शिरात्रयम् ॥ २ ॥

---

जलकुम्भीत्यादि । जलकुम्भी शैवलमाह । अन्ये तु गलगण्डोक्तलेपाः कोषाः पानीया इत्याहुः । तीर्थकृताः पानीयकतिक्तालावुः, अन्ये तु कुष्माण्डभेद इत्याहुः व्यवहारस्तु पर्णपौष इत्येतत् । नकुलमिश्रविरजातम् । जलकुम्भी पाह्या तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिवेत् । उपनाहनमुष्णाद्युपक्रमलेपः स्फोटस्तु वैकल्पमाहनकृतैः । श्वेतेति श्वेतगिरिकर्णिका श्वेतापराजिता ॥ १ ॥

महिषीत्यादौ । पुराणलौहमलं महिषीमूत्रे मासं स्थापयित्वा अन्तर्धूमं दग्ध्वा मधुना लिह्यादित्यर्थः । जिह्वायां स्थाटौ कृष्णस्थूलशिरे वडिशेन शनैः शनैः संगृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यर्थः । तस्मिन् व्रणे स्रुतरक्ते सति सगुडार्द्रकं भक्षयेदिति

## तुम्बीतैलम्।

विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योषदारुभिः॥
कटुतुम्बीफलरसैः कटुतैलं विपाचयेत्।
चिरोत्थमपि नस्येन गलगण्डं निवारयेत्॥ २॥

## अमृताद्यं तैलम्।

तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी॥ ३॥
माक्षिकाढ्यः सततं पीतः क्वाथो मदनमूलजः।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम्॥
पिष्ट्वा ज्येष्ठाम्बुना पेयाः काञ्चनारत्वचः शुभाः।
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः॥
आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत्॥
गण्डमालामयार्त्तानां नस्यकर्म्माणि योजयेत्।

---

अन्ये तु टङ्कारीति पठन्ति तन्मते अम्लवार्त्ताकमिति शेषः। कर्णयुगम् बहिः अस्थाविति कर्णयोः पृष्ठसमीपे उपर्य्युपरि स्थितमित्यन्वयः।

तुम्बीतैले।— अपां यथा कटुतुम्बीफलरस इति परिणतितिक्ततुम्बीफलस्य चतुर्गुणस्वरस इत्यर्थः। तैलमित्यादि सुश्रुतस्य। अमृतवल्ली गुडूची हंसाह्वा हंसपादी वृक्षकः कुटजः। यदाह वाग्भटः— गुडूचीनिम्बकुटजहंसपादीबलाद्वयैः। साधितं पाययेत्तैलं सकृष्णादेवदारुभिरिति। अन्ये तु हिंस्राह्वये इति पठित्वा रक्तश्वेतपुष्पभेदेन काकाह्वयं व्याख्यानयन्ति। अमृतावल्ल्यादिभिः क्वाथकल्कैरिति चन्द्रिका। अन्ये तु एभिः क्वाथैः कल्कैः तैलं चतुर्गुणमित्याहुः॥ २—३॥

अतःपरं गण्डमालाचिकित्सा।— माक्षिकाढ्य इति चक्रादित्येकवाक्यम्। ज्येष्ठाम्बु तण्डुलोदकं काञ्चनारः काञ्चनः। आरग्वधस्य

निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम्॥
कोषातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलीसंयुतेन।
तैलेन वारिष्टभवेन कुर्यान्द्रवोपकुल्ये सह माक्षिकेण॥ ५॥

छुछुन्दरीतैलम्।

ऐन्द्रया वा गिरिकर्ण्यां वा मूलं गोमूत्रयोगतः।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि॥
जलम्बुषादलोद्भूतात् स्वरसाद् द्वे पले पिबेत्।
अपच्या गण्डमालायाः कामलायाश्च नाशनः॥
गलगण्डगण्डमालाकुरण्डांश्च विनाशयेत्।
पिष्टं ज्येष्ठाम्बुना मूलं लेपाद्ब्राह्मणयष्टिजम्।
अभ्यङ्गान्नाशयेत्नूणां गण्डमालां सुदारुणाम्।
छुछुन्दर्या विपक्वं तु यथात्तैलवरं ध्रुवम्॥ ६॥

शाखोटविम्ब्याद्यतैले।

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा।
विम्बश्वमारनिर्गुण्डीसाधितञ्चापि नाशनम्॥ ७॥

निर्गुण्डीतैलम्।

निर्गुण्डीस्वरसे चाथ लाङ्गलीमूलकल्कितम्।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम्॥ ८॥

---

शिफा मूलम्। कोषातकीत्यादि चत्वारो योगाः। पिप्पलीसंयुक्तेनेति पदं कोषातकीनां स्वरसेनेत्यनेनापि सम्बध्यते। कोषातकी घोषक-तस्याः स्वरसः एवं तिक्ततुम्ब्या अपि। वारिष्टभवेन निम्बफलजेन तैलेन तृतीयो योगः वारिष्टभवस्येति पाठान्तरे—अरिष्टफलस्येत्यर्थः। द्रवो-पकुल्ये इति।—पिष्टा मधुना नस्यं विधेयमित्यर्थः। ऐन्द्री गोरक्ष-कर्कटी, गिरिकर्णी श्वेतापराजिता, जलम्बुषा मुण्डितिका अलम्बुषो वा। अपच्यादिनाशने।— छुछुन्दरी छुछुया इति ख्याता मूषिकाकृतिः तस्याः कल्कं जलं चतुर्गुणम्। गण्डमालापहमित्यादिशाखोटकः सप्ता स्वरसकल्करूपया चतुर्गुणस्तु शाखोटकल्करसेन सिद्धं तैलं

वनकार्पासिकामूलं तण्डुलैः सह योजितम् ।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय तु ॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् ।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ॥
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ।
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥
अश्वत्थकाष्ठं निर्गुण्डीं गवां दन्तांश्च दाहयेत् ।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥
पार्ष्णिं प्रतिद्वादश चाङ्गुलानि
मित्वेन्द्रवस्तिं परिवर्ज्य सम्यक् ।
विदार्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात् ॥ ९ ॥

व्योषाद्यं तैलम् ।

मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ।
अङ्गुल्यान्तरितं सम्यगपचीनां प्रशान्तये ॥

---

हितं नस्य विरेचनेषु इति । बिम्बीत्यादि योगान्तरं बिम्बी छिम्बारिति ख्याता तेलाकुचा इत्यन्ये । अश्वमारः करवीरः बिम्ब्यादीनां कल्कोऽत्र चतुर्गुणमिति गयदासः । निर्गुण्डीत्यादौ । निर्गुण्डी श्वेतपुष्पा ॥ ५—८ ॥

अपचीचिकित्सामाह वनेत्यादि त्रयोभागास्तण्डुलानां भेषजस्यैकः । अश्वत्थेत्यादौ वराहमज्जयोगाल्लेपः पार्ष्णिं प्रतीत्यादि । सुश्रुतस्य । पार्ष्णिं गुल्फस्याधोदेशः पार्ष्णिमारभ्य द्वादशाङ्गुलानि मित्वा परिमाण इन्द्रवस्तिं द्वाङ्गुलं परित्यज्य विदारयित्वा जालानि ग्रन्थिजालानि मत्स्याण्डेन सदृशान्याकृष्याग्निं विदध्यादित्यर्थः । एवमपच्यामूलोच्छेदात् प्रशमः ॥ ९ ॥

कक्षाकण्ठादिगतापचीषु बाहुगतमेव कर्माह मणिबन्धेत्यादि । मणिबन्धोऽत्र बाहुसन्धिः अत्र मणिबन्धादूर्ध्वमङ्गुलमेकं द्वयं वा परि-

इक्ष्वाकीत्पलाभवं मूलं मद्यं पुष्येऽपचीं जयेत्।
अपामार्गस्य वा छिन्द्याज्जिह्वातलगते शिरे।
व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च।
तैलमेतैः शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ॥ १० ॥

चन्दनाद्यं तैलम्।

चन्दनं चाभयालाक्षावचाकटुकरोहिणी।
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ ११ ॥

गुञ्जाद्यं तैलम्।

गुञ्जाहयारिश्यामाकसर्षपैर्मूत्रसाधितम्।
तैलन्तु दशधा पचात् कणालवणपञ्चक—मरिचै-
श्चूर्णितैर्युक्तं सर्व्वावस्थागतां जयेत्।
अभ्यङ्गादपचीं नाडीं वल्मीकार्शोऽर्व्वुदव्रणान् ॥ १२ ॥
ग्रन्थिष्वामेषु कुर्व्वीत भिषक् शोथप्रतिक्रियाम्।
पक्वानापाट्य संशोध्य रोपयेद्व्रणभेषजैः ॥
हिंस्रा सरोहिण्यमृता च
भार्गी श्योणाकबिल्वागुरुकृष्णगन्धाः।

---

व्यङ्ग्य रेखा कार्य्या। अतैव गण्डकर्म्मान्तरमाह छिन्द्यादित्यादि।—
व्योषमित्यादौ जलं चतुर्गुणं चन्दनमित्यादौ।—अभया हरीतकी च
व अभयमुशीरं लाक्षावचाहरीतकीकटुरोहिणीचन्दनैः। तैलं पचा
दितं पीतं समूलामपचीं जयेदिति वाभटपाठात् ॥ १०—११ ॥

गुञ्जेत्यादौ।—हयारिः करवीरः तस्य मूलम्। श्यामा वृद्ध-
दारकः अर्कस्य क्षीरं गोमूत्रं चतुर्गुणं दत्त्वा दशधा पाकः ततः कणा-
लवणपञ्चकं मरिचचूर्णं प्रक्षिप्य प्रयोज्यम्। कणा लवणपञ्चकमरिचै-
रित्येकपदम्। घृततैलवसामज्ज्ञा नैकधारपयोदधि। नोचचारमतो वा-
र्य्यमिति ॥ १२ ॥

ग्रन्थिचिकित्सामाह ग्रन्थिष्वित्यादि।—शोथप्रतिक्रियाविधि
वातशोथादिचिकित्सितं तत्र वस्त्रादिकशीलनयनादि विरेचनादि-

स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक् ।
कृत्वा गुल्फोपरि शिरां विध्येत्तु चतुरङ्गुले ॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे ।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत् ॥ २ ॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम् ।
पिष्ट्वारणालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे ।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥
पिबेत् सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वापि यथाबलम् ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ।

---

पेयम् । अथवा श्लीपदाश्रयजङ्घायां रक्तसूत्रेण बन्धनीया । छित्वेत्यादि गोमूत्रपिष्टाक्षयोर्लेपा बोध्याः । सिद्धार्थः श्वेतसर्षपः ॥ १ ॥

स्नेहेत्यादि सुश्रुतस्य । स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ न तु स्वतन्त्रतया स्नेहो देयः सर्व्वश्लीपदानां कफप्रधानत्वात् विरूक्षणीयत्वेन । विध्येदिति । अयञ्च गुल्फोपरि पश्चाद्भागे शिराव्यधोरक्तदुष्टौ सत्यामेव कार्य्यः ।

पैत्तिकश्लीपदचिकित्सामाह गुल्फस्याध इत्यादि-सुश्रुतस्य पित्तघ्नीञ्च क्रियां कुर्य्यादिति योज्यं चकारात् श्लेष्मघ्नीञ्च श्लीपदानां कफप्रधानत्वात् ॥ २ ॥

मञ्जिष्ठामित्यादि ।—हिंस्रा कालाकड़ा । शिरामित्यादि सुश्रुतस्य । सुविदितां व्यक्ताम् । अङ्गुष्ठ इति पदाङ्गुष्ठसन्निधौ क्षिप्रमर्म्मण उपरि द्व्यङ्गुले शिराव्यधः कार्य्यः । क्षिप्रमर्म्म अ-

काञ्जिकेन पिबेन्मूर्ध्वं मूत्रैर्वा दद्रुदारजम् ॥
रजनीं गुड़संयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
गन्धर्व्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तोभवत्यसौ सप्तरात्रेण ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥
गोधावतीमूलयुक्तां खादेन्मासेश्वरीं नरः ।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः ॥ २ ॥

दद्रुदारकचूर्णम् ।

श्लीपदघ्नोरसोऽथवातागुडूच्यास्तैलसंयुतः ।
त्रिकटुत्रिफलाचव्यं दार्व्वीवरुणगोक्षुरम् ॥
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत् ।
सर्व्वेषां चूर्णमाहृत्य दद्रुदारस्य तत्समम् ॥
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः ।

---

धाश्च मरणं स्यादिति । सुश्रुतेऽप्युक्तं पादाङ्गुष्ठाङ्गुल्योर्मध्यं चि-
प्रेति मर्म्म तत्र व्यधे त्वाक्षेपकं मरणमिति ।

कषायाणीति कफहरारग्वधादिगणमुस्कादिगणकृतानि ।
पूतिकरञ्जच्छदजमिति कण्टकी करञ्जपत्रस्वरसं पलमानं कटु-
तैलार्द्धं प्रक्षिप्य पिबेत् । अनेनैव विधानेनेति कटुतैलप्रक्षेपण
इत्यर्थः । गन्धर्व्वतैलमरण्डतैलं गोजलेन गोमूत्रेण । तैलसंयुक्त-
मिति तैलं कटुतैलम् । गोधापदी गोडालियालता तन्मूलस्ये-
कोभागः मासस्य भागत्रयम् ॥ २ ॥

गुडूच्यारस इति स्वरसः क्काथो वा तैलन्तु कटुतैलम् ।
त्रिकटुकेत्यादौ ।— अलम्बुषा मुण्डिरी । दद्रुदारस्य तत्सम-

जीर्णे चापरिहारं स्याद्भोजनं सर्व्वकामिकम् ॥
नाशयेत् श्लीपदं स्थौल्यमामवातं सुदारुणम्।
गुल्मकुष्ठानिलहरं वातश्लेष्मज्वरापहम् ॥ ४ ॥

पिप्पल्यादिचूर्णम्।

पिप्पलीत्रिफलादारुनागरं सपुनर्नवाम्।
भागैर्द्विपलिकैरेषां तत् समं हस्तदारकम् ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः।
जीर्णे चापरिहारं स्याद्भोजनं सर्व्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥ ५ ॥

कृष्णाद्योमोदकः।

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिश्च हरीतक्योगुडस्य तु पलद्वयम् ॥
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ ६ ॥

सौरेश्वरं घृतम्।

सुरसोदेवकाष्ठञ्च त्रिकटुत्रिफले तथा।
लवणान्यथ सर्व्वाणि विडङ्गान्यथ चित्रकम् ॥

---

मिति त्रिकट्वादि सर्व्वचूर्णसमं हस्तदारकस्य चूर्णमित्यर्थः सर्व्वकामिकमिति यथेच्छमित्यर्थः ॥ ४ ॥

पिप्पलीत्यादौ।— अग्निञ्च कुरुत इति दिरेकेण पित्तहरत्वात्। अन्ये तु यस्मादग्निं घोरं कुरुते अतो भस्मकं नियच्छति प्रयाति इत्याहुः ॥ ५ ॥

कृष्णेत्यादौ।— कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम्। विंशतिश्च हरीतक्य इत्यासतिमानात्। मध्वत्र मोदककरणोचितं ज्ञेयम् ॥ ६ ॥

चविकापिप्पलीमूलं गुग्गुलुश्चयुषा वचा ।
अश्वगन्धा पाठा च ग्रन्थिका हरिद्रारकम् ॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत् ।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
एकं स्यादुद्धृतं कल्कात् पिबेत् कर्षद्वयं हविः ॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदःश्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥
अपचीं गलगण्डञ्च अन्त्रवृद्धिं तथार्बुदम् ।
नाशयेद्ग्रहणीदोषं श्वयथुं गुदजानि च ॥
परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम् ।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम् ॥
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम् ॥ ७ ॥

विडङ्गाद्यं तैलम् ।

विडङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्वेलकाख्येषु सर्वेषु लवणेषु च ॥

---

सौरेश्वरघृते सुरसः पर्यासः वृन्दलिखित तन्त्रान्तरसम्वा-दात् निर्गुण्डी वा । दशमूली कषायस्य मिलित्वा प्रस्थं जलं चतु-र्गुणं शेषं प्रस्थमेकम् । धान्यद्रवेण काञ्जिकेन नतु धान्यक्वा-थेन धान्याम्लेनेति तन्त्रान्तर पाठात् व्यवहाराभावाच्च । ननु कयोर्द्रवयोः कियन्मानं ग्राह्यमित्याह प्रस्थमित्यादि । सौरेश्व-रमिति वृन्दा निर्गुण्डीपर्य्यायवाची तेन सुरेश्वरा निर्गुण्डी तत्कृतत्वात सौरेश्वरमिति संज्ञा । जीवकेनेति जीवो वृह-स्पतिः स्वार्थे कः ॥ ७ ॥

विडङ्गादितैले ।— भद्रदारु देवदारु एलकाख्यो भोगला

तैलं पक्वं पिवेद्वापि श्लीपदानां निवृत्तये ॥ ८ ॥

इति श्लीपदचिकित्सा ।

---

## अथ विद्रध्यधिकारः ।

जलौकापातनं शस्तं सर्व्वेष्वेव विद्रधौ ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ १ ॥
वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः ।
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥ ३ ॥

---

एलवालुकमित्यन्ये । पेटिकेत्यपरे । विडङ्गादीनां कल्कं द्रवं जलं चतुर्गुणम् ॥ ८ ॥

इति श्लीपदाधिकारः ।

---

प्रागुक्तसम्वादादेव विद्रधिचिकित्स्योच्यते । जलौकेत्यादि ।— मृदुर्विरेक इति मृदुर्व्विरेको बहुधा कार्य्यः गम्भीरधातुगतदोषकृतत्वात् विद्रधेरिति वदन्ति ॥ १ ॥

वातघ्नेत्यादि ।— सुश्रुतस्य । वातघ्नमूलं दशमूलम् । वातघ्नस्थाने सुरङ्गीति पाठे सुरङ्गी शोभाञ्जनकः ॥ २ ॥

स्वेदेत्यादि ।— स्वेदोवेसवारादिभिः । यदाह सुश्रुतः वेसवारैः सकृशरैः पयोभिः पायसैस्तथा । स्वेदयेच्चापि सततमिति । उपनाहोऽपि तत्रैवोक्तः यथा आनूपौदकमांसन्तु काकोल्यादिसतर्पणाः । स्नेहाम्लसिद्धोलवणाः प्रयोज्य उपनाहने इति । सिद्धपिष्टैरिति स्वेदस्विन्नपिष्टैः ॥ ३ ॥

पुनर्नवादारुविश्वदशमूलाभयाम्भसा।
गुग्गुलुं रुवुतैलं वा पिबेन्मारुतविद्रधौ: ॥ ४ ॥
पैत्तिके शर्कराला जामधुकैः शारिवायुतैः।
प्रदिह्यात् चीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम्।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥
पथ्याद्राक्षाशारिवादूर्व्वानलमूलैः सचन्दनैः।
चीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ॥
इष्टकासिकतालोगोशकृत्तुषपांशुभिः।
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ५ ॥
दशमूलीकषायेण सस्नेहेन रसेन वा।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥
त्रिफलाशिग्रुवरुणं दशमूलाम्भसा पिबेत्।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥ ६ ॥
पित्तविद्रधिवत् सर्व्वां क्रियां निरवशेषतः।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥

---

पुनर्नवेत्यादौ।—अम्भसा क्वाथेन ॥ ४ ॥

पैत्तिक इत्यादि।—सुश्रुतस्य। योगद्वयेऽपि चीरेण पेषणं शारिवा अनन्तमूलम्। पयस्या चीरकाकोली, इष्टकेत्यादि।— सुश्रुतस्य। अत्र मूत्रपिष्टैरिति प्रमादः पाठः किन्तु मूत्रैरुष्णैरिति सुश्रुते पठ्यते अन्ये तु लौहं लौहचूर्णं गोशकृत् गोमयं एभिरिष्टक-चूर्णादिभिर्मूत्रपिष्टैरेरण्डदलमङ्गैः स्वेद इति व्याख्याय मूत्रपिष्टैरिति पाठमेव स्वीकुर्व्वन्ति ॥ ५ ॥

दशमूलीत्यादौ।—सस्नेहेनेति पूर्व्वेण परेण च सम्बध्यते। रसेन मांसरसेन ॥ ६ ॥

पित्तेत्यादि।—सुश्रुतस्य। विपुलवचनस्यापि सर्व्वशब्दस्य

शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुत: ।
अचिराद्विद्रधीन् हन्ति प्रात: प्रातर्निषेवित: ॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नर: ॥
श्वेतवर्षाभूशोमूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतिवापं पिबेत् संशमनाय वै ॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ।
स्रुतेष्वूर्द्ध्वं मधश्चैव मैरेयाम्लसुरासवै: ।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ ७ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं तिलिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ ८ ॥

इति विद्रधिचिकित्सा ।

---

दुष्टत्वात् पुनर्निरवशेषत इत्युक्तं क्षतस्थलेपादि विध्यतिदेशा-र्थम् । शिग्रुमूलमित्यादौ ।— दरपिष्टमीषत्पिष्टम् । वरुणे-त्यादि ।— सुश्रुतस्य । वरुणादूषकादिगणौ सौश्रुतौ । स्रुत इत्यादि ।—सुश्रुतस्य । ऊर्द्ध्वं स्रवतामपि कदाचिच्चिकित्सासा-म्यता चिकित्साभिधानादनुमन्तव्या । मधुशिग्रु इति रक्तशो-भाञ्जनद्रुमस्य मूलम् । मैरेयं मद्यविशेषम् । अम्लं काञ्जि-कम् ॥ ७ ॥

प्रियङ्ग्वित्यादि ।— सुश्रुतस्य । तिलिशोऽतिमुक्तक: । त्वच-मिति निर्देशात्त्वचशब्दोऽपि नपुंसकलिङ्गोऽकारान्तोऽस्तीति

## अथ व्रणशोथाधिकारः ।

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः ॥ १ ॥
मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥
कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ।
सुपर्ण इव नागानां वातशोथविनाशनः ॥

---

गम्यते । चन्द्रटे तु तिलिशं धवमिति पाठोऽदृश्यते । तिलिसै-न्धवमिति पाठान्तरे तिलिः खिलिश एव । प्रियङ्ग्वादिभिः कल्क-द्रव्यं जलं चतुर्गुणं एतच्च तैलं मज्जभवविद्रधौ सुश्रुते पठ्यते ॥८॥

इति विद्रधिचिकित्सा ।

---

विद्रध्युक्तसम्वादात् प्रायेण तुल्योपक्रमत्वाच्चानन्तरं व्रण-शोथचिकित्सामाह । आदौ विम्लापनमिति ।— सुश्रुतस्य । विम्लापनमिह केवलमङ्गुष्ठादिमर्द्दनमात्रे परिभाषितम् । किन्तु विम्लाप्यतेऽनेनेति व्युत्पत्या बहिः परिमार्ज्जनरूपे शमने शोथ-विलयनकरप्रलेपपरिषेकाभ्यङ्गादावपि वर्त्तते । अवसेचनमपि शोधनरूपेऽन्तःपरिमार्ज्जने विरेकवमनरक्तमोक्षणादौ च व-र्त्तते । उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते एवमपरेऽप्यु-पक्रमाः । विम्लापनादयोभाविव्रणविघातप्रयोजकतया व्रणस्ये-त्युक्तम् ॥ १ ॥

मातुलुङ्गेत्यादि ।— सुश्रुतस्य । मातुलुङ्गस्य मूलं अहिंस्रा कुड़करानि कालाकड़ाभेदः । कल्क इत्यादौ ।— स्निग्ध इति

दूर्व्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्व्वे प्रलेपः पित्तशोथहा॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्व्वापणः स्मृतः॥
आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः॥ २॥
अजगन्धाश्वगन्धा च काला सरलया सह।
एकेषिकाजशृङ्गी च प्रलेपः श्लेष्मशोथहा॥
पुनर्नवाशिग्रु दारुदशमूलमहौषधैः।
कफवातकृते शोथे लेपः कोष्णोविधीयते॥ ३॥
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितन्तथा।
न च पर्य्युषितं शुष्यमाणं नैवावधीरयेत्॥ ४॥

---

हतेन। शीतलाश्च गणा इति काकोल्यायुत्पलादिन्यग्रोधादयश्च बोद्धुताः। शोथनिर्व्वापण इति शोथशमन इति। एष एवेति मैत्तिकव्रणशोथविहितः॥ २॥

अजगन्धेत्यादि।— अजगन्धा छागलगन्धा इति भानुमतिः। अन्ये वनयमानिकेत्याहुः। काला अङ्गिका कालाकोडभेदः। सरला सरल एव एकेषिका त्रिवृदिति भानुमतिः। अन्ये तु सरला त्रिवृत् एकेषिका पाठेत्याहुः। अजशृङ्गी कर्कटशृङ्गीति भानुमतिश्चन्द्रिका च॥ ३॥

नरात्रावित्यादि।—न रात्रौ लेपनं दद्यादित्यादिना निषेधविध्युपदर्शनं रात्रौ न सर्व्वथा लेपस्य निषेधार्थं लेपनिषेधेन प्रदेहादिविधानां रात्रावपि सूच्यते। तेन यः प्रदेहो वातकफविषयः स रात्रावपि देयोऽविरुद्धत्वात् पाचनं लेपनन्तु पाचकत्वादेव दातव्यम्। तथा पित्तजे वातपित्तजे च घृतधौतशताव्यक्तं

शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ।
न चापि मुखमालिम्पेत्तेन दोषः प्रसिच्यते ॥ ५ ॥
स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः ।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या तत शनैः ॥

तथा क्षीरशीतजलादिसेकश्च निर्व्वापणतया हीयत एव तथा व्रणकल्कोप्यहोरात्रावस्थायी बन्धोऽपि तत्रैव उक्तश्च वैतरणे।— सर्व्वशस्तु निशां प्राप्य लेपनन्तु निवर्त्तयेत् । क्षीरसर्पिःप्रलेपन्तु हित्वा प्रच्छादनन्तथेति । रात्रौ लेपदाने पुनः सुश्रुते दोष उक्तः यथा न चालेपं रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति । प्रलेपप्रदेहयोस्तु भेदः सुश्रुतेन दर्शितो यथा प्रलेपः शीतस्तनुरविशोषी च । प्रदेहस्तूष्णः शीतो वा बहलोबहुरविशोषी च । बहलइति आर्द्रमहिषचर्म्मोत्सेधः प्रलेपः । प्रदेहस्तु प्रलेपापेक्षया बहुलः । शोथेलेपश्च लोमाभिमुखं देयः । यदाह सुश्रुतः तत्र प्रतिलोममालिम्पेत् न चानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति च लोमकूपान् स्वेदवाहिभिः शिरामुखैर्व्वीर्य्यं प्राप्नोति । प्रतिलोममिति लोमाभिमुखम् । नच नैवेति ।— प्रतिषेधद्वयेन अवधीरयेदित्यर्थः अवधीरणञ्च दूरीकरणं तन्त्रान्तरेऽप्युक्तं लेपश्चोद्धृत्य दातव्यो न यावच्छुष्कतां व्रजेत् । गुणवान्न भवेच्छुष्को भूयोदोषं करोति स इति ॥ ४ ॥

तस्यैवापवादमाह ।— शुष्यमाणमित्यादि । उपेक्षेतेति यावच्छुष्कतां प्रयाति तावच्च दूरीकुर्य्यादित्यर्थः । पीड़नं प्रतीति व्रणपीड़नमुद्दिश्य यो लेप इत्यर्थः व्रणपीड़नलेपस्तु स एव शुष्कः सन् व्रणमुखं पीड़यित्वा पूयं स्रावयति ॥ ५ ॥

कठिनशोथे पारिभाषिकविम्लापनमाह स्थिरानित्यादि ।

विस्रावणार्थं घट्टीयात्तलेनाङ्गुष्ठकेन वा ।
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः ॥
शोथे महति संबद्धे वेदनावति च व्रणे ।
निवारणाय पाकस्य वेदनोपशमाय च ॥
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम् ।
यो न याति शमं लेपस्वेदसेकापतर्पणैः ॥
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ।
एकतश्च क्रियाः सर्व्वा रक्तमोक्षणमेकतः ॥
रक्तं हि व्यक्ततां याति तस्मिन्नास्ति न चास्ति रुक् ।
स चेदेवमुपाक्रान्तः शोथो न प्रशमं व्रजेत् ॥
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥ ६ ॥
तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका ।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते ॥ ७ ॥

---

वेणुनाड्या वेणुदण्डेन, तलेन करतलेन । आदावेवेति उत्पन्न-मात्रे सुश्रुतेऽप्युक्तं अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षण-मिति । शोथ इति व्रणपूर्व्वशोथे । संबद्धे सशोथे एतच्च व्रण इत्य-नेन योज्यम् । शोथ इत्युक्तापि पुनः संबद्ध इति वचनं तादृश-शोथे व्रणे विशेषे च रक्तस्रावविधानार्थम् । सुश्रुतेऽप्युक्तं सशोथे कठिने चाक्षे सरक्ते वेदनावति । संरब्धे विषमे वापि व्रणे विस्रावणं हितमिति । सविषे च विशेषेण जलौकाभिः पदै-स्तथा । अन्ये पच्यमानावस्थं व्रणविषयकमिदम् । उपक्रमान्त-रापेक्षया रक्तमोक्षणस्य प्राकर्ष्यमाह यो न यातीत्यादि । तस्योपनाहैरिति सोष्णबकुलसबहुलेपैः । पक्वस्य पाटनमिति पाटनौषधैः शस्त्रैर्व्वा ॥ ६ ॥

तानेवोपनाहानाह तैलेनेत्यादि ।— तैलेन वाते कफे च

